# वैनायकम्

[ नाटकम् ]

नाटककारः

श्री पं० नारायण शुक्लः व्याकरणाचार्यः वेदान्तशास्त्री
भूतपूर्व प्रधानाचार्यः
[ श्रीनाथ संस्कृत महाविद्यालय, हाटा, देवरिया ]

प्रकाशकः
गर्ग प्रकाशन
खोड़ा, बारादीक्षित, देवरिया (उ० प्र०)

नाटककार:
नारायण शुक्लः व्याकरणाचार्यः वेदान्तशास्त्री
भूतपूर्व प्रधानाचार्यः
श्रीनाथ संस्कृत महाविद्यालय, हाटा, देवरिया (उ० प्र०)

प्रकाशकः
पुस्तकप्राप्तिस्थानं च } गर्ग प्रकाशन, खोड़ा, बारादीक्षित
देवरिया (उ० प्र)

●

प्रथमावृत्तिः १०००

●

प्रकाशन वर्ष १९७९

●



मुद्रक :
पंकज प्रिंटिंग प्रेस एण्ड स्टेशनर्स
बरहज, देवरिया (उ० प्र०)

महाकविनारायणशुक्लविरचितम्

# वैनायकम्

चान्द्री कक्षां श्रियमधियतो भालचन्द्रस्य भूम्नः
नामान्याशु स्मृति विषयतां नीयमानानि स्युस्तत्
विघ्नस्तोमा जलधिशरणं शान्तिमाप्तुं श्रयन्ताम्
साध्यं सिद्ध्यान्मनसि निहितं भक्तिभाजां जनानां ॥ १ ॥

मान्यामम्बां विबुधमनुजैः सेवितां शुभ्रवस्त्रैर्
हंसाऽऽरूढां स्फटिकविहितां मालिकां धारयन्तीं
वीणामङ्के धवलकमले विष्टरे संजुषाणां
वन्दे देवीमभिमतफलैर्लालयन्तीं प्रपन्नम् ॥ २ ॥

लक्ष्मी विष्णोर्मसृणशयने शेषनागप्रभूते
सव्ये पार्श्वे निवसनपरां भूषणैर्भूषिताङ्गीं
सिद्ध्यष्टाभिर्निखिलनिधिभिर्दूरयन्तीं महद्भिः
तापैस्तप्तान् स्तुतिनुतिरतान् राजयन्तीं नमामः ॥ ३ ॥

सूत्रधारः-

महेन्द्रकोशाधिपवीरभद्राः सुनन्दिकोमाः सुमनाः सरस्वती
गुहो गणेशो गिरिशो लिहेयुरभद्रमोजोऽभिनयस्य कुर्युः ॥ ४ ॥

(नेपथ्यमभिलक्ष्य) आर्ये यदि नेपथ्यसंस्कृता भवती आत्मोपस्थित्याऽनुग्रहविषयतां नेयोऽयं जनः ।

नटी-( प्रविश्य ) आर्य ! इयमस्मि ! को निदेशोऽनुग्रहापेक्षी श्रीमतां ।

सूत्रधारः–आर्ये इयं हि परिषन्नाट्यकलाभीरसभावानुभूति-
चातुर्यैः समलङ्कृतै र्विद्वद्भि सुरै र्मनुजैः सङ्कुला।
अस्यान्नवतमेन श्रीमन्नारायणशुक्लरचितेन वैनायक-
नाम नाटकेनोपस्थेयमस्माभिः। तत् समैरभिनेतृभिः
सावहितै र्भाव्यम्। यतोऽस्माकं विश्वजनीना नाट्ययशः-
सम्पत् स्थायितां शिलष्यन्ती समद्रियेत।

नटी–आर्य! अहर्निशं सुपात्रैरभिनेतृभि र्नाट्यकलाप्रदर्शनाल्-
लब्धख्यातिभिर् देशान्तरेऽपि स्वनामाधन्यै र्निपुणं
प्रयोक्ष्यते! मा स्म शुचः। पन्थानं निदिशतु तावज्
यमाश्रित्य अस्याः परिषदः श्रुतिसम्प्रमोदं साधयामः।

सूत्रधारः–आर्ये! सम्प्रति निखिलजनमानसानन्दयिता,
मनस्विनीरुत्कयितुं पटीयान् नहि केवल मानवानेव
प्रत्युत्सुरान् तपस्विनोऽपि विषयतां गमयन् राजते
ऋतुराजो वसन्तः। पश्य—

द्विरेफमाला स्वदते सरक्ता रसालपुष्पं मनुजा समोदं
खगाः समुत्का पशवोऽपि चेतुं प्रयत्नमग्ना ललिता स्वरामाः ॥५॥

अपरं च

सुमनो लतिकां स्वदते भ्रमर दयया कलितां मृदुताविभवाम्
मुदमात्म कृते दधते प्रणयी नहि रूपमिदं तनुते प्रणयम् ॥ ६ ॥

नटी–आर्य मधुपं मधुरमुपालभमानो भवान् सत्यमाह यत्
प्रेमाणमुभयाश्रयमेव लोकाः समाद्रियन्तेऽतोऽहमपि
वासन्तिके गीते प्रवर्तिता गायामि।

प्रसूनसम्पत्तियुजोत्रजातीः प्रकुर्वतो गन्धवहं सुगन्धिं
दिशोनुरक्तान् युवतीः सयूनोः वसन्तलक्ष्मी स्मयते निरीक्ष्य ॥ ७॥

सूत्रधारः–आर्ये तत्र गानस्यारोहावरोहक्रमो भावाभिव्यक्ति-
प्रकारश्चावर्णनीयतां गतौ। रङ्गोऽपि चित्रित इव
लक्ष्यते। अहं तु स्वयमानन्दभराक्रान्तो यथा विनायक-
जन्मना भगवान् शङ्करः। (निष्क्रान्तौ)

( इति प्रस्तावना )

## प्रथमोऽङ्कः

[ प्रविशति भगवाञ्छङ्करो वैयाघ्रचर्मासने स्थितो मन्दसुगन्धिसमीरसत्कृतः समाधौ परमब्रह्मध्यायन् विजया च ]

विजया–( कमलमुकुलसमाकृतिमञ्जलिं बध्नन्ती आपादपद्मं प्रणम्य )
अहो धन्या वयं यत् सम्प्रति पुत्ररत्नं मातुरम्बिकाया अङ्कमलङ्कुरुते ।

शङ्करः–सत्यं !!! शोभनम् शोभनम् । सुधास्यन्दि ते वचः ।

विजया–महानुभाव ! अहं श्रीमतां सम्मुखमुपतिष्ठासुः हृदये मुहुर्मुहु दूयमाना आसम्, यदतिगाढे समाधौ निरतान् भवतः कथं विज्ञापयिष्ये । परं समाधिविरतान् दृष्ट्वा परमानन्दसन्दोहे सुस्नाता ।

शङ्करः–विजये ! सत्यमाह भवती । हिमशंखपयोनिभः स एव कैलासः, तदेव वैयाघ्रचर्मासनं, श्रुतिसमादिष्टं तदेव ब्राह्ममुहूर्तं, स एव हृद्विकारी प्रातःकालिकः पवनः, स एव चाहं परन्तु समाधये चेष्टमानोऽपि न तस्मिन्नधिरूढः । तत्र हेतुमनवगच्छन् यावत् त्वां समीक्षे; त्वमितः परावृत्य पार्वतीमनुसेवस्व ।

विजया–यथा भवान् आदिशति ( निर्गता )

शङ्करः–( स्वगतम् ) अहो पुत्रजन्मानन्दो ब्रह्मानन्दमप्यतिशेते । अयत्नं समाधियोक्ताऽपि समाधिविरतो भूत्वा गृहस्थ इव विषयितां प्रपन्नः प्रमोदमहाजलयानमधिरूढश्चास्मि ।

यतः

सुतः सुहर्षं तनुते प्रसादं लोके सुखं शान्तिममुत्र नित्यम् ॥
मनो वियुङ्क्ते न कदापि यस्मात् योगं विना मुक्तिरनेन साध्या ॥१॥

अथ च

सर्वं सांसारिकं तापं हरते सुतदर्शनम् ।
ब्रह्मदर्शसमानं हि कुरुते हर्षमव्ययम् ॥२॥

नन्दिकेश्वरः—( प्रविश्य करौ शिरसा संयोज्य ) देव ! द्वारि दर्शनाऽऽकाङ्क्षी सुरराजः प्रतीक्षते ।

शङ्करः—सबहुमानं प्रवेशय ।

( नन्दिकेश्वरो गच्छति । अग्रे अग्रे देवराजः पृष्ठतो नन्दिकेश्वरश्च ) एह्येहि देवराज । आसनमिदमलङ्कुरुताम् । कथय कुतः समागमनम् ।

( नन्दिकेश्वरो निर्गतः )

देवराजः—( प्रणम्यासनमासाद्य ) भगवन् ! आगच्छन्नहं पथि, श्रीमतां परान् सुखयितुं धृतव्रतानां सुतलाभं श्रुत्वा हर्षनदमवगाहमानो देवपादमूलमुपागतः । तदुपहारस्वरूपाणां देशसमयानुकूलानामेषां स्वर्ग्यवस्तूनां स्वीकरणेन अनुग्राह्योऽयं जनः ।

शङ्करः—सुरराज ! कस्तूरिकाऽऽमोदितमनो मोदयितुं नहि सुमनसां गन्धाः पारयन्ते । पारावारोऽहर्निशं यं सुखयते कथं स पयोबिन्दून् परतोऽभिलषेत् ? यद्यपि परब्रह्मानन्दसन्दोहपरिप्लावितस्वान्तो न क्षुद्रेषु काम्येषु आनन्दलवमपि लक्षयते तथाऽपि भक्तेच्छापूरणं तु अस्माकं व्रतमेव । अतस्तव प्रार्थितं निखिलं समाद्रिये । नहि तत्र मनागपि विचिकित्सा पदं लब्धुं समुत्सहते ।

देवराजः—तदनुजानीहि मां गन्तुं सर्वर्तुसुखावहं शीतातपनियन्त्रं स्वर्ग्यादपि मनोरमं हर्म्यं निर्मापयितुं विश्वकर्मणा,

तत् कुप्यैरकुप्यैश्च वसुभिः पूरयितुं कोशाध्यक्षं कुबेरं प्रेरयितुं च ।

शङ्करः—गच्छन्तु यथेच्छं महाभागाः । ( प्रणम्य निर्गतो देवराजः )

नन्दिकेश्वरः— प्रविश्य प्रणम्य ) देव ! भगवन्तं साक्षात्कृत्य आत्मानं पूतं विधित्सु विश्वकर्मा निदेशं प्रतीक्षते ।

शङ्करः—सादरमानय ।

नन्दिकेश्वरः—यथादिशति भवान् ( निर्गतः )

विश्वकर्मा— प्रविश्य पादपद्मं नमन् ) श्रीमन् ! सुरराजनिदेशात् महाविशालं राजभवनादपि महनीयं त्रिभुवनवन्द्यं भवनं निर्मितं विद्युत्प्रकाशमिश्रं विद्युद्व्यजनाङ्कितं विशिष्टमहानसं स्नानागारमध्यमपेक्षितस्थानेषु पयस्विनीरदयन्त्रशोभितं सर्वसाधनसम्पन्नम् । तन्निवर्तनाय सदयं निदिश ।

शङ्करः—विश्वकर्मन् ! अहरहः शिवास् सपरिवारं त्वां वृणीयुः पन्थानश्चानन्दकराः स्युः । ( नमस्कृत्य निर्गतो विश्वकर्मा )

नन्दिकेश्वरः—( प्रविश्य प्रणमन् ) देव ! वहिः धनाध्यक्षो महानुभावः कुवेरो हार्दमात्मनीनं निवेदयितुं कामयते ।

शङ्करः—क्षिप्रमानय

नन्दिकेश्वरः—यथा निदेशः ( निर्गतः )

कुवेरः—( प्रविश्य, नमन् ) देवाधिदेव ! विश्वकर्मणा निर्मापितेषु सर्वेषु गृहेषु वहुमूल्यानि विष्टराणि फलकोपरि आस्तीर्णानि । विविधैः काम्यैः फलैः सरसैरन्नैश्च परिपूर्णं भोज्यागारम् । महर्घैः रत्नैः मुक्ताफलैः जाम्बूनदैरतिमात्रैर् रजतैरपि यथावकाशं सम्भृतं राजतं कोशगृहं । किमधिकं वर्णये यद्यदपेक्षितं भवति सुखाय तदखिलं संगृहीतम् । मनोविनोदाय रम्यशालासु दर्शनीयानि चलच्चित्राण्यपि सन्निधापितानि ।

सुरेशादेशानुरूपं श्रीमतां दयया स्वधियोऽनुरूपं भवनमिदं राजगृहवदलङ्कृतम् ।

शङ्करः– अतः परं किमिच्छति भवान् ?

कुबेरः–इतः परं यदि श्रीमतामभिलषणीयं परिहीणं न भवेत्तर्हि मां स्वगृहं प्रति निवृत्य अधिवस्तुं समादिशन्त्वत्रभवन्तः ।

शङ्करः–कुबेर ! विरहोत्कण्ठितं स्वीयं परिवारं सेवस्व । न मे काचन इतोऽपरविषयिणीच्छा हृदये जागर्ति । नातः परं परिशिष्टं किंचिज् यन् मनोविषयितामधिशयीत ।

( प्रणम्य कुबेरस्य प्रस्थानम्

नन्दिकेश्वरः–( प्रविश्य प्रणम्य ) विश्ववन्द्य ! द्वारमध्यास्ते विबुधाचार्यः ।

शङ्करः–ममान्तिकं प्रापय सम्मानपूर्वकम् ।

नन्दिकेश्वरः–यथाज्ञापयति श्रीमान् । (निर्गतः आचार्येण सह प्रविश्य) इत इत आचार्यः

आचार्यः– प्रविश्य, नमस्कुर्वन् ) नाथ एष कुसुमाञ्जलिस्ते चरणयोरवकाशं लभेत । बालकश्च दीर्घायुर्भूयात् ।

( नन्दिकेश्वरो निर्गतः )

शङ्करः–आसनमलङ्क्रियताम् । केन ज्ञातमिदं वृत्तम् ।

आचार्यः–वीरभद्रेण सूचितम् ।

शङ्करः–समयेनोपस्थितो भवान् । ( पाद्यार्घ्याचमनीयादिभिः विविध-फलमिश्रै रत्नैश्च देवगुरुं सम्मान्य ) जातकस्य भाग्यं विवेचयन्त्वत्रभवन्तः ।

आचार्यः–आनन्दमूर्ते ! अयं शिशुः धिया, बलेन, विनयेन, शरीरकान्त्या दीर्घतमेन आयुषा च भाविनो भूतान् जीवान् सुरांश्चातिक्रम्य निरवच्छिन्नां पित्रोर्मुदां सन्ततिं साधयिष्यते । किं बहुना अस्य गुणानां नामग्राहं वर्णनमशक्यमेव ।

शिशुस्तवायं गुणशीलवर्यः धिया बलैः पित्रनुवर्तनैश्च ।
सुरैर्मनुष्यैरसुरैः प्रतीक्ष्यो यशास् त्रिलोक्यां रविवद् वितन्यात् ॥३॥

शङ्करः--अरिष्टयोगोऽपि अवलोक्यते ?

आचार्यः--आम् । अहोभिरेव अरिष्टयोगोऽवक्लोक्यते । परन्तु असौ अकिंचित्करः । क्लेशागमोऽयं बालकस्य अभ्युदयाय भविष्यति ।

शङ्करः--गृहप्रवेशमुहुर्तमपि ज्ञापयन्तु महानुभावाः ।

आचार्यः--भवता निर्मापितमिदं गृहम् ।

शङ्करः--नहि नहि अत्रैवागतेन देवराजेन विश्वकर्मणा निर्मापितं कुबेरेण च आवश्यकसामग्रीभिः पूरितमिदं गृहं । भक्तानामाग्रहेणात्र प्रवेशोऽवश्यं करणीयः ।

आचार्यः--नूतनगृहप्रवेशो दिनास्माच्चतुर्थे दिनेऽहर्मुखे भवेच्चेत् तस्मिन् निवासिनोऽनुदिनं प्रमोदपारावारे स्वान् स्नापयिष्यन्ते स्वप्नेऽपि दुःखानुभूतिं नाश्रयिष्यन्ते । पुत्राः पौत्राश्च समृद्धिमन्तोऽनुरक्तपरिजनाश्च भविष्यन्ति ।

शङ्करः--आचार्य ! श्रीमता वर्णितं जातकभाग्यं श्रोत्रेन्द्रियेण निपीय हर्षसम्भृतं मे हृदयं पुरो वर्तमानं सर्वमिदं जगत् आनन्दपूर्णं निरीक्षते ।

आचार्यः--नो दूयेत् चेतश्चेत् प्रस्थातुमीहे ।

शङ्करः--गृहप्रवेशोत्सवानन्तरं स्वनिकेतं प्रति जिगमिषुर्भवेत् श्रीमान् ।

आचार्यः--भगवन् एवमेव स्यात् ।

शङ्करः-- कः कोऽत्र भो

नन्दिकेश्वरः-- प्रविश्य प्रणम्य को निदेशः ।

शङ्करः--अभिनवगृहस्य वासन्तिकेनुऽभागे देवगुरुम् संस्थापय । तत्रत्यान् सावधानान् कुरु । येन ते देवगुरोः सेवायाः

पश्चात्पदा न स्युः ।

नन्दिकेश्वरः-यथाऽऽदिशति श्रीमान् । ( इति उभौ निष्क्रान्तौ )

( नेपथ्ये ) इत इत आगच्छन्तु आचार्यपादाः

शङ्करः-( स्वगतम् ) सुतजन्म आश्चर्यकारि वस्तु अस्ति । इदं केवलं कुलवृद्धिकरमेव नास्ति अपि तु सम्पूर्णसौभाग्यस्य मूलं सम्पदामाश्रयं विपदां विनाशनं शत्रूणां मानमर्दकमिष्टमित्राणां हर्षवर्द्धकं चास्ति । भक्ता भगवद्दर्शने योगिनो ब्रह्मसाक्षात्कारे ज्ञानिनोज्ञानप्राप्तौ यमानन्दमनुभवन्ति तमेवानन्दं प्राप्तुं प्राणिनो सुतमिच्छन्ति ।

नन्दिकेश्वरः-( प्रविश्य ) मेनका, तिलोत्तमा, उर्वशी दिदृक्षवो अप्सरसः द्वारि स्थिताः सन्ति ।

शङ्करः-प्रवेशय

अप्सरसः-( प्रविश्य प्रणम्य यथास्थानं स्थिताः ) प्रभो दर्शनेप्सवोऽपि वयं भयादिह उपस्थातुमसमर्था आस्म परन्तु देवपतिरस्मान् आश्वास्य सेवार्थं न्यदेशयत् । अतो दयालोश्चरणं समीपतो विलोकने सक्षमा भवामः ।

शङ्करः-अप्सरसः ! वो भीतिरस्थाने । प्रतिक्षणं योगाभ्यासरतोप्यहं सुतोत्सवे गृहप्रवेशे चास्मिन् सम्प्रवृत्तो गृहस्थ इव सांसारिके विधौ दिवारात्रौ समाध्यासितमना अस्मि ।

मेनका-दयालो ! अखण्डयोगिनो भवतः गृहस्थ इव संसारप्रवृत्तिरियम् भक्तान् रमयति । प्राप्तोभयरूपदर्शनसौभाग्या वयं धन्याः ।

शङ्करः-मादृशां ब्रह्मानन्दमेव परानन्दं मन्यमानानां विषयान् तुच्छतया गणयतां स्वप्नेऽपि तदाभाससंसक्तिमलभमानानामियं दशा चेत् ये तु अहर्निशं मात्रिकं

सुखमेव प्रधानं लक्ष्यं मन्यमानास्तदर्थं प्रयतमानाः क्षणमपि ईश्वराराधने मनो लगयितुं न पारयन्ते तेषां कोऽपराधः? कष्टक्लिष्टे गार्हस्थ्ये यत्किञ्चिदपि ते स्मरन्ति तदेव बहु।

उर्वशी-प्रसीदन्तु, सेवाकरणाय आदिशन्त्वत्रभवन्तः।

शङ्करः-यूयं सम्प्रति प्रसज्जमाने मम महीयसि महे सुमधुरध्वनिगीतैः सोल्लासाः प्रवृत्तिमाचरथ। निर्विशङ्का गायथ नृत्यथ हावभावान् प्रदर्शयथ। नापरात्स्यथ।

तिलोत्तमा-प्रभो! स्वकीयं हार्दमेकं संशयं निवेदयितुं कामये, मम धाष्ट्र्यं न गणयेयुश्चेत्।

शङ्करः-निःशङ्कं कटु प्रियं वा मनोगतं भावं प्रकटय। भयलेशो नो समाविशेत्ते चेतः।

तिलोत्तमा-नाथ! यदि अहर्दिवं प्रतिक्षणं समाध्यासितयोगाभ्यासा भवादृशाः प्रभवोऽपि विषयैर्मुक्तिपथात् प्रभ्रश्य स्वोन्मुखाः क्रियन्ते तदा अन्ये तं पन्थानं कथमात्मने हितकरं मंस्यन्ते? अथ च श्रौतमिदं मुमुक्षुत्वं कथं वा व्यावहारिकं स्यात्?

शङ्करः-सत्यमिदमाह भवती। मां साधारणं लौकिकमिव प्रवर्तमानं दृष्ट्वा मोक्षपथात् विचलितं न कल्पयेत। यतो मुमुक्षुर् बहिरिन्द्रियैः गृहाऽऽसक्त इव व्यवहरन्नपि मनसा स्वं सुखिनं दुखिनं न करोति। परब्रह्माऽभिन्नं नित्यमानन्दस्वरूपमनुभवति। विषयैरम्भसा नलिनीपत्रमिव निर्लिप्त एव भवति।

तिलोत्तमा-( करौ संयोज्य ) आनन्दमूर्ते! सन्देहो मे व्यपगतः।

मेनका-भगवन्! श्रुतिसुखदः कीदृशो ध्वनिः श्रूयते?

शङ्करः-आम्! ज्ञातं! नवगृहप्रवेशमाचारयतो विबुधाचार्यस्यायं माङ्गलिकोऽनुष्ठानक्रमः।

नन्दिकेश्वरः-(प्रविश्य प्रणम्य) भगवन् ! देवगुरुः स्मरति भवन्तम्.
शङ्करः-चल । अहमागत एव । अप्सरसः स्वमनोनुकूलं कुरुथ ।
देवगुरोरादेशं सम्पाल्य पुनरागच्छामि । ( निष्क्रान्तः )
तिलोत्तमा-प्रियसख्यौ तथा नृत्यतं यथा—
पदो नंदन्नूपुरकिङ्किणीभि श्चलत्सकाञ्चीकृशमध्यकम्पैः ।
कराग्रशाखाभिरलं सुपद्भिर व्यनक्ति रागं सुरमानवानाम् ॥४॥

( उर्वशी मेनकया सह नृत्यति )

( नेपथ्ये )

रत्नफलपल्लवचितं मनोहरं पीतं कलशं वहन् स्वपरिवारानुगतः
प्रविशतु भवानभिनवगृहं ।
तिलोत्तमा-एषो हि बालः
पितुरमितसुमोदं मानवृद्धिं वितन्वन्
निजकुलमहिमानं मातृहर्षं प्रकुर्वन् ।
तरणिरिव तमोन्धं दूरयन् हार्दमुग्रम्
भुवनमखिलमेतद् भासयेच्छ्रीविलासैः ॥५॥

( पुनर्नेपथ्ये )

सुहृदाः सुखसम्पन्ना मुदां ग्रामे निषेविताः
निराकुर्यु रभद्राणि स्वजनै र्वन्दिताः सुराः ॥ ६ ॥
श्रयन्तामुदयं शान्तिं मुहुरर्च्या मनः प्रियाम्
शरण्या वासिनो जह्यु धर्मस्य परिपन्थिनः ॥ ७ ॥
उर्वशी-अथ च
वितरतु धनमेभ्यः प्राज्यमन्नं पयांसि
फलममितमभिष्टं स्वादु धर्म्यां मनीषां ।
सुनतसुतसुधांशुं चारुवैदुष्यचुञ्चुं
विधिरिह निवसद्भ्यः प्रेमराज्य प्रसूतिम् ॥ ८ ॥
तिलोत्तमा-सखि मेनके ! मृदु गीतिं गाय । सर्वेषां मनांसि
हर । अहं नृत्यामि । उर्वशी सहचरी भविष्यति ।

श्रममपि अपनय। (नेपथ्ये)
अयि जातक ! गणेश नामाऽसि

मेनका-अयतु शिशु गणेशोऽदभ्रमायुः सुदीर्घम्
विसृजतु गुरुरस्मै शेमुषीं श्रौतशीलाम् ॥
अतुलितवलराशिं स्वास्थ्यलक्ष्मीसहायम्
मुदमभितसुकान्ति मानसायास्य पित्रोः ॥ ६ ॥

(ततः प्रविशति नृत्यन् शङ्करः पृष्ठतो आचार्यश्च)

तिलोत्तमा-सखि मेनके ! आश्चर्यमाश्चर्यं ! शिवोऽपि स्त्रीकीये नृत्ते प्रवृत्तः। वयं श्रान्ताः स्म। अतो मुहूर्तं विरम्य श्रममपनयामः। नटराजनृत्तं साक्षात्कृत्य आत्मानं पुनीमहे। (सर्वा उपविष्टा)

उर्वशी-सख्यौ समालोकयथ ! शिवकरे धृतो वाद्यमानो डमरुरविरतं शब्दायते। पादौ प्रतिक्षणं भुवि धार्यमाणौ उत्क्षिप्यमाणौ च मण्डलं रचयन्तौ सञ्चरतः।

मेनका-हला ! जटामपि पश्य। विसारिणी सा सर्वतः सोत्कम्पा छत्रवत् परिवर्तते। मणिबन्धे ग्रीवायां च धृता व्याला प्रत्यङ्गकम्पनेन पीडिता पलायन्ते। सटास्था भागीरथी अपि अनेकधा भूत्वा तत्तल्लोकेषु गच्छति।

तिलोत्तमा-सखि ! नृत्यान्महान् लाभो भवति। गिरीशभालं न त्यक्तुकामाऽपि प्रस्रवणी सा जह्नुकन्या मृत्युलोकं पुनाति। देवा मानवा गन्धर्वाश्च प्रत्यक्षीकृतशिवनृत्ताः विहतपापाः संसिद्धमनोरथा जाताः। वयं चापि नृत्तवैशिष्ट्यं निभाल्य अपूर्वज्ञानलाभेनात्मनस्तोषमनुभवामः।

उर्वशी-हुं नृत्तं समाप्तम् ?

मेनका-अथ किम्।

उर्वशी-दर्शनेच्छा तु अपूर्णा एव।

मेनका-कस्त्वं निवेदयेदात्मविहारिणम्। श्रमचिन्हानि पश्य।

तिलोत्तमा-सखि मेनके! अनादिनिधनं महानुभावं धूर्जटिमापृच्छय सुरेन्द्रभवनं प्रयातव्यम्। तन्निवेदयाऽस्मान अनुग्रहीतुम्।

मेनका-( समीपं गत्वा प्रणम्य ) अनुग्रहपरायण! अनुजानातु नो निवर्तितुं शक्रभवनम्।

शङ्करः-सफलमनोरथाः सत्यः सुधर्मामलङ्कुरुत। पुनः समयेन स्वोपस्थित्या गेहमिदं भूषयत।

( सर्वाः प्रणम्य निष्क्रान्ताः ) आसां स्वरमाधुरी प्रशंस्या।

विबुधाचार्यः-यदि रोचेत भवते तु अनुजानातु भवान् इन्द्रसदः प्रयातुम्।

शङ्करः-आचार्य! श्रीमतां मते स्थितोऽसौ सुराधिपोऽनुदिनमेधमानतेजाः प्रतिक्षणं सपरिजनपरिफुल्लहृदयं भवन्तं समाद्रियेत पन्थाश्च मनोहारी सुखदः स्यात्। वाच्योऽसौ शचीपतिः मद्वचनात्—

प्रबोध्यश्चानुकम्प्यः स्वर्गेशो यदहं तद् राज्यस्य।
उत्तरोत्तरं वृद्धिकामो यथावसरं स्मरणीयस्तेन॥ १०॥

विबुधाचार्यः-यथाऽऽह भगवन् ( निष्क्रान्तः )

शङ्करः- कः कोऽत्र भो

नन्दिकेश्वरः-( प्रविश्य ) आज्ञापयतु श्रीमन्।

शङ्करः-विजयां त्वरितमिहोपस्थापय।

नन्दिकेश्वरः-यथाऽऽदेशः ( निष्क्रान्तः )

( विजयाद्वितीयः प्रविश्य ) भगवन्! इयम् विजया

विजया-( प्रणम्य ) कृपालो! निदिशतु।

शङ्करः-प्रियाङ्कमासीनं सुतं द्रष्टुकामः।

विजया-महती कृपा। ( निष्क्रान्ता )

( नेपथ्ये ) इत इतो भवती।

( ततः प्रविशति सबालका जगदम्बिका विजयया अनुगम्यमाना )

शङ्करः-( दूरतः प्रियां निर्वर्ण्य ) अये प्रिया मन्युम्लानेव लक्ष्यते को हेतुः ?

गिरिजा-( प्रणम्य ) धन्यः श्रीमान् यदनुक्तमपि आधिमूहितवान् ।

शङ्करः- भवति ! मुखपरिम्लानता ते सकारणा किम् ।

( आसनं निर्दिश्य ) अत्र तिष्ठ ।

गिरिजा-अथ किम् । अद्य रात्रेः पश्चिमे यामेऽशुभमेकं स्वप्नं निरीक्ष्य व्यथिता एव आसम तावत् सूचितोऽस्मि अनया ।

शङ्करः- स्वप्नं श्रावय ।

[ शिशुं विजयामर्पयन्ती ]

गिरिजा-पर्यङ्कात् सुतोऽदृश्यतां यातो, बहुपरिदेवनानन्तरं प्रगाढे प्रयत्ने विहिते गजमुखो भूत्वा ममक्रोडमधिरूढः ।

शङ्करः-स्नेहो अनिष्टभीरु भवति । अस्थाने ते शोकः । विष्णो र्नामसहस्राणि स्मर । मनसो ते व्यथा शमं व्रजिष्यति । इदमतिप्रियं ते शिशो वृत्तं श्रावयामि--अस्यजनुर्मात्रा-देव सेन्द्राः सुरा निरातङ्का जाता अतिवृद्धमहोदयाः शत्रुञ्जयाश्च । अनुक्षणमस्योत्तरोत्तरं कल्याणं कामयमा-नास्ते सन्ति । तत् कुतोऽस्याभद्रमाशङ्कसे ?

गिरिजा-स्वामिन् निखिलं ते गदितं श्रुत्वाऽपि मे हृदयं न जाने कथं वेपत इव ।

शङ्करः-किमेवं भूयो भूयः खिद्यसे । ममेच्छां विना वायु र्वातुं वह्निर् ज्वलितुं नीरं स्यन्दितुं धरा स्थिराभवितुं चतुर्दश-भुवनवासिनोऽसून् धारयितुमपि न पारयन्ते किमुत तवार्भके पापमाचरितुं । तस्मात् स्थिरा भव अविशङ्कं विचर । ध्रुवमेतदवेहि यदि शिशुरयं कुशली विश्वमदः सकुशलं नो चेत् सहैव प्रलयमालिङ्गिष्यते ।

किं वहुना त्वं यदेषिष्यसि तदेव स्यात् यन्नैविषिष्यसि तन् किमपि कथमपि न स्यात् ।

गिरिजा–प्रभो ! नवीनं जगत् स्रष्टुं सृष्टञ्च तद् विहन्तुं रूपान्तरं वा प्रापयितुं शक्तस्य ते वचो विश्वासभूमिः कुतो न । अस्तु तपश्चरितुं विशतु भवान् योगाश्रमम् ।

(शङ्करो निर्गतः)

विजये ! आनय प्राणप्रियं पयस्यन्तं सुतं, महान् विलम्बो जातः ।

विजया–सखि ! मुहूर्तमात्रं शिशोः स्वस्य प्रेक्षणीयं दृश्यं साक्षात् कुरु तदनन्तरं पाययिष्यसि पयः । एषोऽत्र पर्यङ्केऽनवरतं पादौ चालयन् व्यायामं कुर्वन् मल्ल इव प्रतिभाति कराङ्गुष्ठं मुखे लिहन् भूयसा दुग्धेन तृप्यन्निवाऽऽस्ते मध्ये मध्ये यदा कदा स्मयतेऽपि । संलक्ष्यैनं मोदमहार्णवो मनसि जायमानो दुःखग्रामं समूलं निहन्ति ।

गिरिजा–सखि ! विजये सत्यमेतत् । अहं तु एवमनुभवामि यत् शृंगाररसस्य प्राधान्यं कविभिरालङ्कारिकैश्चोक्तं तन्न युक्तं । यतस्तस्मिन् प्रसक्तो मनुजस्तं वहुकालं वोढुं न समर्थः । अयं तु न तथा सावधिकोऽपत्यस्नेहः ।

विजया–अथ किम् । गृहाणैनम् ।

गिरिजा–( बालं क्रोडे कृत्वा )

पिव सुमधुर दुग्धं गव्यमेतत् सुपाच्यम् ।
अनुपमवलकर्तृ स्फूर्तिवुद्धिप्रदायि
नहि तुलयितुमदोऽस्मिन् मातृभिन्नोत्थदुग्धैः
विवृणु वदनमच्छं यत्र देयं मया तत् ॥ ११ ॥

( पुनर्पुन गायन्ती पाययति )

विजया–भो कालमतिक्रामति । एहि विष्णुपूजनाय चलाव ।

( उभे प्रतिनिवृत्ते )

( नेपथ्ये )

स्वागतं गुरुचरणेभ्यः (ततः प्रविशति असुराचार्यः )

असुराचार्यः—अये असुरेशो मामुपतिष्ठते फलार्घ्येण । (प्रविश्य)

असुरेशः—( अर्घ्यं दत्वा )

आपत्तिपाथोधिजलं निपीय सम्पत्तिरत्नाकरवृद्धिहेतुं ।
नियम्य देवान् दनुवर्धनोत्कं नमामि पादौ सुरनिग्रहाय ॥१२॥

असुराचार्यः—अपि कुशलं सपरिच्छदं ।

असुरेशः—नहि देवानां वृद्ध्या विघ्नितम् ।

असुराचार्यः—स्पष्टम् ब्रूहि ।

असुरेशः—किं श्रीमतामद्यावधि अविदितमेतत् यद् गणेशजन्मना देवानां श्रीः प्रतिक्षणमुदयशिखरमञ्चति । असुराः राज्यभ्रष्टा गिरिदरीषु कौशिकवत् शरणं श्रिताः भीताः कथञ्चित् फलैः कन्दैः शरीरं धारयन्ति स्वप्नेऽपि नाशासन्ते सुभोज्यं, राज्यलाभस्तु खपुष्पमिव प्रतिभाति । किं बहुना यदि एवमेव निराश्रिता स्युः तर्हि असुरकुलस्य नामापि भविष्यति श्रुतिविषयं न स्यात् ।

असुराचार्यः—असुरेश ! किमेवं बालवत् परिखिद्यसे । किं न जानासि यत् संजीवनीं विद्यामहमेव जानामि मत्तोऽपरो देवो मनुजोऽसुरो वा तामद्यावधि वेत्तुमधिगन्तुं प्रयोक्तुमसमर्थ एव । तद्बलेन मृतानपि जीवयिष्यामि ।

असुरेशः—महानुभाव ! जीवितैरपि तैरधिकारविहीनैः निःशक्तैः किं प्रयोजनं, को लाभः ? जीवनादस्मान् मृत्युरेव श्रेयान् इति गणये । अतोऽनुदिनमेधमानानां सुराणां शक्तिं क्षपयितुं प्रभावकारो विधिरवश्यं विधेयोऽस्माभिः सति समये । अन्यथा यावज्जीवं दुःखपरम्परैव हस्तलग्ना स्यात् । अपरञ्च इदमवश्यं ध्येयं भवता यत् योहि आशुतोषो भगवान् शंकरोऽपिस्वल्पेनापि तपसा तुष्यन्

प्रार्थितसिद्धिद आसीत् सोऽपि पुत्रजन्मनाऽतिमात्रं तुष्टः सुरानुपकुर्वन् सततमस्मान् उपेक्षते ।

असुराचार्यः—असुरेश ! सत्यं ब्रवीषि । स्थाने खिद्यसे । परन्तु धैर्यमवलम्ब्याऽभीष्टप्राप्तये यतस्व । यतो हि—

अधिरता बुद्धिविनाशकर्त्री तनोति भीतिं मनसोऽप्रसादम् ।
अगण्यचिन्ताभिरलं शरीरं रुजा सुतप्तं लभते न शान्तिं ॥१३॥

अथ च

सुधैर्यपोतं दृढमाश्रितेभ्यो विपत्पयोधिं ददते न कष्टं ।
प्रचण्डवह्निः पवनोऽतिशीतो गिरिर्न रुन्धे प्रगतिं प्रकामम् ॥१४॥

असुरेशः—श्रीमतां सुधोपमं वचः कर्णरन्ध्रेण हृदयं प्रविश्य दोषान् दूरयन् शमं स्फूर्तिं प्रमोदञ्च लम्भयति । आशासे सद्यः सिद्धिमपि वशगां कुर्यात् ।

असुराचार्यः—स्वस्थो भव । सुखेन वस । शीघ्रमेव यत्नं करोमि । मम मित्रं शनैश्चरोऽद्यमिलनाय कृतसमयोऽस्ति । सः मार्गे मिलेत् चेत् शीघ्रं प्रेषणीयः ।

असुरेशः—यथादिष्टमवश्यं यतिष्ये । (प्रणम्य निर्गतः)

असुराचार्यः—कदा मित्रेणाऽहं हिमनयनजेनाशु परितः
दृशा दृष्ट्वा सिक्तो बहु शिशिरये स्वामिह तनुं
दृशोः पाद्यं शैत्यं भवति सुहृदां वाचि च सदा
तनोः स्पर्शे जाते व्रणविभरकं ह्यौषधिवरं ॥ १५ ॥

(नेत्रे निमील्य वारं वारं पठति)

(शनैश्चरः प्रविश्य)

शनैश्चरः—उन्मीलय अक्षिणी । एष औषधिः ।

असुराचार्यः—(चक्षुषी प्रमृज्य) एहि एहि मित्र चिराद् दृष्टोऽसि । कथय परिजनवृत्तं । कथं वाऽध्वानमतरन् ।

शनैश्चरः—प्रणमामि । सर्वे कुशलिनः । आशुतोषकृपया दृष्टोऽसि भवद् दर्शनेन पथिजं कष्टं सुखे परिणतम्

संसृतौ यान्यपि मधुराणि सुखदानि वस्तूनि सम्भवन्ति तेषां सारतमेनांशेन मित्रसृष्टिरिति मन्ये ।

असुराचार्यः-अथ किं । भण दृष्टस्त्वया कुमारः ।

शनैश्चरः-कस्य कुमारः ?

असुराचार्यः-यस्य गृहात् कृपया च समायासि तस्य भगवतः शङ्करस्य ।

शनैश्चरः-गृहादागच्छामि न च कैलासात् । अस्ति तस्य कुमारः ?

असुराचार्यः-आम् आम् गणेशो नाम । वय पिनाकिसुतसन्दर्शनेन विहताऽभद्राः । तत्त्वमपि तं साक्षात् कृत्य कल्याण-परम्परामनुभवेः । चिरं मा कुरु ।

शनैश्चरः- एहि एहि भ्रातृजायां प्रणम्य गन्तुं समीहे ।

असुराचार्यः- अस्वीकृत्य मे स्वागतविधिं कुत्र यास्यसि ! पूर्वं पाद्यमर्घ्यमाचमनीयं विधाय स्वादूनि श्रमार्तिहराणि पेयानि लेह्यानि भक्ष्याणि च स्वीकुरु ततोऽभिगमने मन आधत्स्व यथा शरीरं मानसं वाऽशर्म त्वां नाभिभवेत् ।

शनैश्चरः-मित्रवचोऽपरिहार्यमिति अमृतप्रायाणि भक्ष्यपेयानि स्वीकरोमि ।

असुराचार्यः-मित्र मुखाम्बुजं विलोक्य हार्दं भावं निवेद्य तव मानसं च कर्णरन्ध्रेण निपीय धन्यतमोऽहं सुखनदमव-गाहमानोऽतितरां भ्रिये ।

शनैश्चरः-मित्र ! अभिवादये । भगवन्तं शङ्करं द्रष्टुं प्रतिष्ठे । देहि मे चाशिषः सकुशलं परावर्तनाय ।

असुराचार्यः-तात चिरं जीव । ममोपरि ध्यानमपि देयमवश्यम् कल्याणमवाप्नुहि । ( उभौ निर्गतौ )

—❋—

( ततः प्रविशति भद्रान्तकः शुष्कमुखोमलिनधौताङ्गरक्षकः )

भद्रान्तकः- (परिभ्रमन्) (स्वगतम् व्यर्थतां गतं सकलं पाण्डित्यं राजसेवया । क उपयोगस्तस्यात्र । सर्वदैवात्र प्रवञ्चनायाः साम्राज्यं । राज्ञां राज्यस्य च रक्षार्थं सर्वं क्रियते । राजनीतौ नास्ति औचित्यस्य धर्मस्य वा स्थानम् । विरोधिनं विनाश्य स्वार्थसाधनं प्राधान्येन समाद्रियते । एतादृशमेव राज्यतन्त्रं संचालयितुं सुहृदो बन्धवो भृत्या महान्तो लघवो वा राज्याऽधिकारिण उपनिबद्धाः । अत्रत्य सत्यं दोषापराधौ स्वार्थमूला भवन्ति । स्वार्थाय इमे जघन्यतममपि कर्म कर्तुं कारयितुं वा न विचिकित्सन्ति ( स्थिरो भूत्वा सर्वतः पश्यन् ) को नु खल्वेष आगच्छति रे गहने कान्तारे । अत्रापि नावकाशः । अहा ! अयं तु वयस्यो मे विद्याधरः । एहि मित्र । कच्चित् कुशली ।

विद्याधरः-त्वद्विरहाद्सुरेशो बहु अस्वस्थशरीरो जातः । प्रतिक्षणं त्वामेव चिन्तयति ।

भद्रान्तकः- त्यज नाम तस्य । अस्वस्थतां दर्शयते मन्त्रभेदभयात् न च प्रेमाधिक्यात् । बहु कृतं तस्मै । त्वं राजतंत्रं न जानासि । अत्र हि

दयात्सुहिंसाव्ययसंचयेषु विरागरागे वृजिने सुपुण्ये
मृदुत्वकाठिन्यविसक्तभाक्षु सुभूपनीति गणिकेव रक्ता ॥१॥

विद्याधरः-मित्र ! जानामि सर्वं परन्तु यथावसरं प्रतिविधेयं प्रत्युत्पन्नमतिकैः भवद्भिः । यतः

विचक्षणः सोऽत्र महामनस्वी वियस्समग्रैस्सगुणैरुपेतः ।
पतत्सु शस्त्रेष्वपि भीविरक्तो मनो न तप्तो समये प्रवुद्धः ॥ २॥
तमात्मवन्तं पुरुषं सदा श्रीः निषेवते भर्तृपरेव पत्नी ।
क्रुधा न कामान्न च मानहेतोः सती यथा मुञ्चति नापि स्वप्ने ॥३॥

भद्रान्तकः-सर्वं सुष्ठु भणसि । रिपुः प्रतीक्षतेऽवसरं न च मित्रं । किन्तु मया यत्कृतं तदस्ति केनाप्यज्ञातम् । त्वद् गुरुसमीपं निखिलं दोषचयं ममोपरि निक्षिपता कृतं तेन मित्रसदृशं कर्म ! आसीदुपकारस्य पुरस्कारः किमु ।

हिताय युञ्जन् विपदो विनिघ्नन् गुणान् वितन्वन् वृजिनं सुहिंसन्
धनेन हीनं सहितं समं यो भुनक्ति प्राणैस् सुहृदस्स मित्रम् ॥४॥
विचित्रचातुर्यविभासिवार्धिः प्रपन्नमैनाकगिरिं निजान्तर्
निवेश्य रक्षत्यनिशं मघोनः सुतीक्ष्णवज्राद् विरमत्यधर्मात् ॥५॥

विद्याधरः-सुहृद्वर ! त्यक्त्वाऽसुरेशं द्वयमपि आत्मोन्नते द्वारं मा पिधेहि । असुरेशं विनाश्य मम राज्यार्धभागं गृहाण इति सुरेन्द्रवचनं तिरस्कृत्य त्वया प्रथमं स्वोन्नतिमार्गं पूर्वमेव पिहितं समयेऽस्मिन् च सुरेन्द्रगुरो विबुधाचार्यस्य सूनोः कचस्य वधं कृत्वा तन्मांसं दनुजाचार्यं भोजयित्वाऽसुरेशाच्च स्वमैत्रीमुन्मुच्यापरमपि मार्गं पिधातुं प्रयासं मा कुरु इति मे प्रार्थना ।

भद्रान्तकः-मित्र पुरस्करणीयोऽसि । परन्तु मानवो नार्हति आत्यन्तिकरूपेण निष्करुणो भवितुं । न च मे पादौ प्रसरतः गमाय तत्र । मैत्र्याः लज्जायाश्च आधारोऽस्ति विसतन्तुतोऽपि सुकुमारतरः । उभाभ्यामपि तस्य रक्षा करणीया ।

विद्याधरः-परन्तु प्रथमोऽयं तस्यापराध इति मर्षितव्यः । कूपान् निःसरणसाधनान्तराभावे सर्पाश्रयणमपि वरं ।

भद्रान्तकः-करिष्याम्येव, का गतिः ।

विद्याधरः-विरम कोऽपि विटपान्तरितः शृणोति । नहि नहि आगच्छति इत एव ।

भद्रान्तकः-भो अभद्रेश्वरोऽयं प्रतिभाति महाराजासुरेशस्य ज्येष्ठाङ्गरक्षकः ।

विद्याधरः-सत्यम्। कथमयमत्र दृश्यते।

भद्रान्तकः-त्वमेव सावहितः पृच्छ।

विद्याधरः-आगच्छ मित्र। कुतः।

अभद्रेश्वरः-अभिवादयेऽत्रभवन्तौ। कैलाशादागच्छामि।

भद्रान्तकः-स्वस्ति तेऽस्तु। कथं कैलाशं गतवानसि।

अभद्रेश्वरः-गुरुणामाज्ञया।

विद्याधरः-का आज्ञा आसीत् तत्रभवतां।

अभद्रेश्वरः-ताभ्यां जातः गणेशो नाम महाप्रतापी सुतः।

उभौ-ततस्ततः।

अभद्रेश्वरः-महाराजासुरेशप्रार्थनया गुरुचरणाभ्यां प्रेपितस्तत्र अस्मत् सखिस्थानीयो देवः शनैश्चरः सुतमुखदर्शन-व्याजेन गृहाभ्यन्तरं प्रविश्य तं मारयितुम्। असौमन्द-गतिकः। अतस्ततः समाचारानयनाय प्रेषितोऽहं तेन।

उभौ-सफलताऽवाप्ता।

अभद्रेश्वरः-उभयत्र असफलता एव हस्ते आगता।

उभौ-स्पष्टतया भण।

अभद्रेश्वरः-यथा देवयानी प्रार्थनया असुराचार्येण कचो जीवनं पुनः प्रापितः मृतसंजीवनीविद्यया चालङ्कृतः तथैव शनैश्चरदृशा भग्नग्रीवो गणेशस्तन्मुण्डेऽशरीरिणा मया चोरितेऽपि सरस्वतीप्रार्थनया ब्रह्मणा सौभाग्यात् तया सह तत्रैवायातेन कुतश्चित् गजशावकमुण्डं समानीय पुनर् जीवितः सर्वैः पूजनीयश्च कृतः।

भद्रान्तकः-हन्त जीवितः कचः।

विद्याधरः-मित्र मा शुचः। अशरीरं स्थानादस्मात् पलायि-तव्यम् पारस्परिकं वैरं कलहं वा विस्मृत्य एकीभूय शत्रुविनाशाय यतितव्यम्

अत्रान्देवाधिपराज्यलक्ष्मीर् बिभेति शत्रोः विमनाः सुतक्यात्
तं क्लैव्यपूज्यं कथमत्र लक्ष्मीः सेवेत सक्ता हृतमानसाधिः ॥६॥
अथ च
अधीरतासक्तहृदोऽरिमान्याः प्रजाहितं प्राणभयात्त्यजन्तो
रणाद् द्रवन्तो ललनाललामाः सुता न वन्ध्यत्वहृतौ समर्थाः ॥७॥
भवताऽपि विचार्य करणीयम् । यतः
शकृन्मदापांशुविलीनवर्ष्म शिशुं विशुद्धं जननी विधाय
स्थात्यशङ्कं बहु लालयन्ती तथा सखायं च सखा करोति ॥८॥

( इति परिक्रम्य निष्क्रान्ताः सर्वे )

इति विष्कम्भकः

( ततः प्रविशति गजवदनो गणेशो रुदन् माता गिरिजा च )

गिरिजा–सुत गणेश ! किं रोदिषी ।

गणेशः–षडाननो दण्डयति

गिरिजा–किं कृतं तेन ।

गणेशः–पश्य मम श्रोत्रे छिन्नप्राये नासिके मुञ्चन् मर्दिते एको दन्तो मूलेन नाशितः पादौ प्रगृह्य सशर्करे प्रदेशे घर्षितः ।

गिरिजा–( गृहकार्यं त्यक्त्वा पश्यन्ती ) अहो पृष्ठस्य त्वक् भग्ना ( विक्रोशन्ती ) सर्वं शरीरं क्षतजै र्व्याप्तं (मुखम् उद्घाटय अवलोकयन्ती ) मुखादपि शोणितं स्रवति । तत्र कोपि भद्रपुरुषो नासीत् पुत्रक ?

गणेशः–तैरेव अपवाये दूरे कृतः । कलहान्निवारकानपि अभद्रवाचं वदति स्म ।

गिरिजा–( द्वारि आगत्य बालकस्य अश्रूणि मार्जयन्ती लोहितनेत्रा कुटिलभ्रूः शोणमुखा षडाननमनवलोकयमाना ) रे बालकाः दृष्टा युष्माभिः षडाननश्चाण्डालः ।

बालकाः–आम्, आम् पश्य गुप्तोऽयं गुल्मे ।

गिरिजा–उभयतो बाहुमादाय आनय

बालकाः—दूषयति नः सगोत्रं निन्दति च ।
गिरिजा—मम पार्श्वमानयत । बहु बली जातः पश्यामि तं ।
( उभयतो धृतबाहुं षडाननं शिखामादाय कपोलयोश्चपेटं दत्वा )
भण रे त्वया कथं शाठ्यमाचरितं स्वभ्रातरि गणेशे ?
षडाननः—( रुदन् ) नाहं तावत् गणेशेन समोऽपराधी । पूर्वमसौ ममोपरि रजो विकीर्णवान् ततो मया प्रतिशोधं कुर्वता अभिधावितः । पलायमानोऽध्वस्थशिलाखण्डेनाऽऽलटस्थेन पद्भ्यां निपीडितो भृगोः प्रपतन् बहु दूरं नीचैरगच्छत्, तेनेयं दशा न तु मत् प्रहारात् । नाहमनृतं वच्मि पश्य मम धूलिधूसरितान् केशान् ( मुण्डमवनमय्य दर्शयति )
गिरिजा—गणेश ! कथमेवं त्वमविनयमाचरः ।
गणेश—प्रथममयमेव मुखं नासिकां शुण्डञ्चाभिलक्ष्य रूपमधिक्षिपन् मां बहु उपहसितवान् अन्यैर्बालकैरपि तथैव कारितमनेन । तदनन्तरं मया धूलिप्रक्षेपो विहितः
गिरिजा—पुत्रक ! त्वमपि तथैव आसिः । भाग्येन नु कारितमिदं ।
( सकरुणं रोदिति ) क्षमस्व बन्धोरपराधम् ।
गणेशः—प्रिय बन्धो एहि ( श्लेष्टुमिच्छति यावत् पादयोः पतति, तरसा समुत्थाप्य वक्षसा संयोजयति )
षडाननः—( रुदन् ) अधुनातः स्खलितं न करिष्यावः ।
गिरिजा—(उभौ क्रोडे दधाना प्रमदातिरेकेण प्रबहद्भिरस्रैः स्नापयन्ती )
अतः परं कदापि मिथौ वैयात्यं न प्रयोक्तव्यं यतः शैशवे यो गुणोऽगुणो वा पदमादधाति स यौवनेऽपरिहार्यो भवति । यथा हि—

घटो नवस् संस्कृतिमाप्नुवन् यां समेति पाकं नहि सा सुमार्ज्या
शिशोस्तथा दोषगुणौ विभातः सुपुष्टिमाप्तौ तरुणे न हार्यौ ॥६॥

उभौ—प्रतिजानीवहे ।

गिरिजा-अणुरपि अप्रियता कुलविनाशयित्री यथा विटपसंघर्षजः स्फुलिङ्गः सकलं महारण्यं निःशेषं दहति। ( पुत्रयोः स्वस्य च नेत्रे प्रमृज्य शाटिकाञ्चलेन ) परस्परं सदा स्नेहपूर्वकं व्यवहर्तव्यं क्रीडाहासपरिहासादिष्वपि शिष्टता न हेया। ज्यायस कनीयसो र्व्यवहारः सम्यक् परिपालनीयः। निष्ठुरो रूक्षो मेलविघातको मानसो दैहिको वा विधिर्नाश्रयणीयः।

उभौ--सावधाना स्याव।

गिरिजा--पुत्रकौ

प्रयुज्य दण्डानहितान्निरस्य सुवृत्तविद्यासुयशोविभूतीः
सुते निवेश्यात्मरतिं प्रकामं हितैषिणौ वै पितरौ रिपुघ्नौ ॥१०॥

अथ च

धियां विलासै र्वियुजां तृणानाम् बलासुवैक्लव्ययुजां सुयुक्तिर्
गजान् सदर्पान् यवितुं सुशीला विदां नृणां सा विदधीत किन्नु ॥११

गणेशः--नीरसाश्चेतना हीना कुशाः काशाश्च मुञ्जका
न भान्ति मिलिता रज्जौ तथा नौविद्धि चाम्बिके ॥१२॥

( इति कथयन् पादयोः पतति )

गिरिजा--विजये ! पुत्रकौ आगतौ संस्नाप्य सर्वक्लेशहारि पेयं दत्वा भोजय।

विजया--( प्रविश्य ) यथादेशः ( पुत्राभ्याम् सह निर्गता )

गिरिजा--( स्वगतम् ) मातुः कर्तव्यं दुष्करं। रमणी या काऽपि भवितुमर्हति परन्तु मातृपदनिर्वाहो यया कयाचिदेव क्रियते। समाजे रामरावणयोरर्जुनसुयोधनयोः कृष्णशिशुपालयोः निर्माणकारिकाः मातर एव।

शङ्करः--( प्रविश्य ) क्व मे पुत्रकौ भो।

गिरिजा--अधुनैवाभ्यन्तरं गतौः। विजये ! पुत्रकौ प्रेषय।

विजया--( प्रविश्य ) (सुतौ अग्रे कृत्वा ) इमौ सुतौ।

शङ्कर--युवां सदा क्रीडथः। श्रुतेरभ्यासं कथं न कुरुथः?
षडाननः--मनो विनोदाय इषुक्षिप्या अभ्यासं विदधे तावत्।
गणेशः--विहितपठिताभ्यासोऽहं चरणयोः सङ्कोचापनयनाय भ्रमणाय गन्तुं समीहे।
शङ्करः--समयेन पठनम् वा खेलनम्। खेलनसमयो न भवेत् पठनसमयादधिकमिति चिन्त्यम्। इदानीमध्ययनं न रोचते चेत् अध्ययनं विहाय स्वच्छे रम्ये पवनसम्वलिते प्रदेशे भ्रमतां येन चेतः सम्प्रसादं लभेत।
उभौ--व्रजाव स्वच्छन्दं वायुं सेवितुम्।
शङ्करः--गच्छतां, शीघ्रं परावर्तेताम् विलम्बं मा कुरुताम्।

( उभौ निर्गतौ )

गिरिजे अनयो र्वृद्धिः सन्तोषप्रदा किमु।

गिरिजा--अथ किम्।
विजया--हवनीयानि प्रस्तुतानि।
शङ्करः--एहि चलावः।

( इति निष्क्रान्ताः सर्वे )

*

नेपथ्ये

स्मृतो जनै विघ्नशतं निहन्ति प्रमोदराशिं वितरत्यनन्तम्
तुष्टो गणेशस्स मुदात्मरूपः कुर्यान्नतं नौ सफलं विधेये ॥ १ ॥

( ततः प्रविशति उर्वशी मेनका च )

उर्वशी–यथा आकाशात् पृथिवी प्रकाशपूर्णा अदृश्यत तथैव कैलासादाकाशोऽपि ।

मेनका–आम् री। सखि पश्यसि कैलासं। विधिविलसितं किमिति क ऊहितुं प्रभुः। योऽयं कैलासो हिमतुहिनपिहितपाषाणसंकुलोऽरण्यवल्लीसहायो विजनो नागरिकेभ्योऽपि भयप्रद आसीत् स एव इदानीं नवागतेभ्योऽपि हर्षदः संजातः। ये तु एतेन पूर्वं कृतपरिचयास् तेषामानन्दसीमैव नास्ति। सम्प्रति एनं विहायाऽन्यत्र गमने रुचिरेव नोदेति।

उर्वशी–सुधर्मातिरस्कारकारका नवातिनवा सर्वर्तुसुखावहाः शैत्यघर्मतापविवर्जिताः कृत्रिमविद्युत्कमनीयकान्तिकान्ताः शिवगणवनितामनोरमैः गानैरप्सरसां कण्ठध्वनिचोरकैस्तर्पिता गृहा राजन्ते। शीतांशुकान्तिरचिता स्वर्णादी रजतराजपथमिव प्रतिभाति।

मेनका–अत्र तु सखि शरन्मासायते मासो दिनायते दिनं क्षणायते दुःखं सुखायते अभिलाषश् च फलायते किं बहूक्तेन सर्वं प्रियतरायते।

उर्वशी–सखि मेनके जानासि कीदृक् सुख भवति मातरमभिधावतः गृहाभ्यन्तरे बहुलातान् शिशून् दृष्ट्वा ?

मेनका–मुग्धे यथा त्वं तथा अहं परन्तु तर्केणेदमनुभिनोमि यत् पुत्रपौत्रान् दृष्ट्वा एव गृही अपारमानन्दमनुभवन् न स्मरति स्वर्गस्य।

उर्वशी–( परिक्रम्यावलोक्य ) एतदेव भगवतः शङ्करस्य गृहमिति

तर्कये। पश्य दर्शनार्थिनां भक्तानां सम्मर्दः प्रतिक्षणं वर्धते। मन्ये सुरलोकनिवासिनां गमनागमनै र्गेहमिदं नगरायते।

मेनका-वाह्यतः परिदृश्यमानं वैषम्यमेव शिवस्यानुमापकम्। एकतः शिवगणानां महोत्कटं नटराजनृत्तमपरतो रूपलावण्यकलाकलितानां नववयोवनितानां मृदुमधुरवचोभिः पेशलं गायनाढ्यं नृत्यम् एकत्र ऋषीणां साममन्त्रैः शिवस्तुतिरपरत्र धनुर्विद्यामभ्यसतोः गणेशकार्तिकेययो र्धनुषां ध्वनिः शिवसमीपे एव सम्भवति।

उर्वशी-सखि मेनकेऽत्रत्यं कलानैपुण्यमवलोक्य स्वकलाभिज्ञतां प्रति संदेहो जायते। किम् आवाभ्यामपि विधिनानेन शङ्करो न तोषणीयः।

मेनका-सर्वं समयेन। एहि मुख्यद्वारं चलाव।

उर्वशी-(परिक्रम्य) अये नावलोक्यते तत्रभवान् नन्दिकेश्वरो ह्यत्र।

नन्दिकेश्वरः-(प्रविश्य) अयमस्मि भो। कथय कोऽस्ति (दृष्ट्वा) अये! भवत्यौ आगच्छतां

उभे-(नाट्येन प्रणमन्त्यौ) महानुभाव त्रिपुरारातिं दिदृक्षू स्वः।

नन्दिकेश्वरः-भक्तान् बोधयितुं भगवान् शङ्करः इत एव आगच्छति तावन्निवेदयामि (इति निष्क्रान्तः)

(ततः प्रविशति भगवान् शङ्करः)

शङ्करः-सर्वे सफलमनोरथाः सन्तु।

नन्दिकेश्वरः-(प्रणम्य) महाराज उर्वशीमेनके द्रष्टुं द्वारि निदेशं याचेते।

शङ्करः-लम्भय प्रवेशं।

नन्दिकेश्वरः-यथाऽऽदेशः (प्रणम्य निर्गतः)

(उभाभ्यां सह प्रविश्य)

नन्दिकेश्वरः-आगच्छतां पुरोवर्तिनं देवं पश्यताम् ( निर्गतः )

उभे-( प्रणम्य )

शं यायामस् त्रिभुवनपते सत्वमूर्ते रजस्वि
देहं धत्सेऽधिवससितमो वर्ष्मरूपं विचित्रं
नैतत् स्वस्मै अपितु गहनं दग्धुमिच्छुः परेषां
तत्तो पादान् विनतशिरसस् त्रायमाणान् कुरुष्व ॥ १ ॥

अगणितसुरविघ्नान् पीडयेस् त्वं क्षणेन
निखिलवलपतित्वे कार्तिकेयं निवेश्य
गणपतिमथपुत्रं स्वेच्छया वा सुयाधं
विगमय सुरभीति भातु शक्रः स्वपुर्यां ॥ २ ॥

शङ्करः-कच्चित् कुशली महेन्द्रः सपरिवारः ?

उभे- भगवन् सर्वं समीचीनं—

तुहिनकिरणकान्तश्चन्द्रमा भीतिरक्तोऽ
पगमयति निशान्धं न प्रमादं प्रयाति
रविरहनि मयूखैं र्हन्ति तीक्ष्णैस्तमस्कं
सततगतिरमोघं श्वासरत्नं तनोति ॥ ३ ॥

तथा

अहिपतिरहिलोके भाति विभ्रंस् त्रिलोकीं
ददति जलममूल्यं वारिदा सस्यहेतो
रुदधिनिकृतवह्नि र्वाधिसीमां स पाति
त्रिनयन तव नेत्राद् भान्ति कर्तव्यशीलाः ॥ ४ ॥

शङ्करः-आगमनप्रयोजनं वदतम् । को निदेशः खलु शचीपतेः ।

मेनका-देवराजो निवेदयति चतुर्दशभुवनवास्तव्या निर्भया आनन्द-समवेता स्वं स्वं कर्तव्यं याथातथ्येन सम्वहेयुरन्यायस्यानी तेरनाचारस्य च नाम अपि न स्यादिति कृते समुचिता सैन्यव्यवस्था आवश्यिका ।

उर्वशी-भगवन्! प्रजासु मिथोविरोधभावशमनाय विधानपरिपालनबुद्धिसमुत्पादनाय बाह्याभ्यन्तरशान्तिसंस्थापनाय चापि सुदृढं सैन्यबलमपेक्षितं।

मेनका-भवत्कृपया तत्तु आमाकं पार्श्वे अस्त्येव। परन्तु रक्षामन्त्रिणोऽभावे सर्वमिदं दूरापेतं प्रतिभाति।

उर्वशी-गुप्तचरविभागाध्यक्षेण च संसूचितं यत् शीघ्रमेव दानवाः आक्रमणकरणाय विचारयन्ति। प्राचीनः सेनापति र्वयआधिक्यात् सेवानिवृत्तः अतस्सोऽपि अपेक्षितः।

शङ्करः-कोपयोगोऽत्र मम इति विव्यक्तं वाच्यं। अधिकारी तु तत्रभवान् महेन्द्र एव।

मेनका-महामहिमशालिन्! सप्रश्रयं देवसभेयम् सर्वसम्मतं प्रस्तौति रक्षामन्त्रित्वे गणेशस्य सेनापतित्वे च षडाननस्य नाम। यथोचितादेशो देयः आभ्यामिति देवस्य प्रार्थना। श्रुत्वा देवः प्रमाणम्।

शङ्करः-मद्वचनात् सूच्यः शक्रः सफलमनोरथो देवसभा च पूर्णाभिलाषा।

उभे- शक्रपुरगमाय निदेशापेक्षिण्यौ स्वो भगवन्।

शङ्करः-सफलतया सह गच्छतम्। ( प्रणम्य निर्गते )

कोऽत्र भो परिचारकेषु ?

नन्दिकेश्वरः-( प्रविश्य ) नन्दिकेश्वरः पादयोः प्रणमति।

शङ्करः-पुत्रकौ समुपस्थापय।

नन्दिकेश्वरः-यथा देवः आज्ञापयति। ( निष्क्रान्तः )

( पुत्राभ्याम् सह प्रविश्य )

नन्दिकेश्वरः-श्रीमतां पादयोः गणेशषडाननौ प्राप्तौ।

गणेशः-गृह्यतां गणेशस्य प्रणामाञ्जलिः।

षडाननः-एष षडाननः प्रणमति।

शङ्करः-सम्मुखीनौ स्यातं पुत्रकौ।

उभौ— ( तथा भूत्वा ) सावधानौ स्वः ।
शङ्करः—एका प्रतिस्पर्धात्मिका परीक्षा आयोजयिष्यते शीघ्रमेव महेन्द्रेण । तदर्थमात्मानं सज्जी कुरुतं । यतो हि

सुखयति खलु वह्निः प्राणिनां शीतकाले
शिशिरमधुरनीरं तापतप्तं सुग्रीष्मे
सुसमयनुगीता ग्राम्यगाली सुवृद्धान्
दलितयजनधर्मा वीरभद्रो हि लोकम् ॥ ५ ॥

अपरञ्च

धृतसमथधनुष्को भानुमान् विश्ववंद्यो
ह्युदयगिरिमयन् यो ध्वान्तमन्धं निहन्ति
सुखयति नरलोकं देवलोकं तथान्यान्
लगयति निजकृत्ये पोषयन् विघ्नसंघान् ॥ ६ ॥

गणेशः—गृहीतमादेशः । उत्साहमतिभ्यां सर्वं तरितुं शक्यम् ।
षडाननः—किं करणीयमस्ति तत्र ।
शङ्करः—त्रिलोक्याः परिक्रमणमेकम् ।
षडाननः— एतत्तु अधुनैव सत्यादेशो सम्भवति ।
गणेशः—परीक्षाविषये समुपस्थिते विलम्बोऽहितकरः ।
षडाननः—तात अधुनैव समादिश्यतां न स्यात् काचित् हानिश्चेत् । अदो वचो मे धमनीः सञ्चालयति हृदयं सोत्साहयति च ।
शङ्करः—सुष्ठु अस्ति । अधुनैव गच्छतं । विजयिनौ स्यातम् ।
उभौ— गच्छावस्तात । ( प्रणम्य निर्गतौ )
शङ्करः—नन्दिकेश्वर ! समुपस्थापय गिरिजां ।
नन्दिकेश्वरः—यथा निदेशः ( निर्गत्य गिरिजया सह प्रविश्य ) भगवन् एषा भगवती ( निर्गतः )
गिरिजा—स्वागतमार्यस्य । पुत्रकौ कुत्र स्तः ।
शङ्करः—परीक्षयामि तौ ।

गिरिजा-किमर्थम्

शङ्करः-भवकल्याणाय ।

( ततः प्रविशति पूजनसामग्रीसहितो गणेशो वेगेन )

गणेशः-तात वां सम्पूज्य गन्तुं समीहे ।

उभौ-कुरु स्वेष्टम् ।

( गणेशः संक्षेपेण सम्पूज्य उभयोः परिक्रमणं करोति )

गणेश--करौ सम्पुटयन् पूज्यचरणाः कृतत्रिलोकीपरिक्रमोऽभि-
वादयते गणेशः । ( ततः प्रविशति षडाननोऽपि वेगेन )

षडाननः-पालितादेशस्य षडाननस्यायम् प्रणामाञ्जलिश्चरणेषु ।

उभौ-कल्याणभाजौ भूयास्ताम् ।

षडाननः-भ्रातः भवता न पालिताः समादेशाः पितृचरणानां ।

गणेशः-तात अज्ञातसारोऽस्ति भवान् ।

षडाननः-त्रिलोक्यां भ्रमता भवता कोऽपि वा केनचिद् भवान्
दृष्टः कुत्रचित् ।

गणेशः-प्रियबन्धो ! माता पृथिवीतो गुरुतमा पिता चाकाशाद्
गरीयानिति शास्त्रसमादेशः । तयोः परिक्रमणं कुर्वता
मया किमु त्रिलोकी न चलिता ।

पश्य

धराजनन्यौ भुवनं दधातो गरीयसी मातृसुदेवता नु
स्नेहार्द्रलालित्यमयै वचोभिर् दोषान् निरास्योदयमानयन्ती ॥७॥
पिता नभोरूपमिहास्ति भ्रातः सुपोष्य यो वर्धयते सुतं वै
अतस्तयोरेव मया कृतो भो विनीतभावेन परिक्रमो हि ॥ ८ ॥

षडाननः-सर्वमिदं कुतर्कमात्रम् । अहमेवास्मि प्रथमः परिक्रमिता
त्रिलोक्याः ।

गणेशः-विषयेऽस्मिन् न किञ्चिदपि वक्तुकामोऽस्मि । अतः परं
तातपादाः प्रमाणम् ।

शङ्करः-युवयोः सारं वलं मेधाञ्च संलक्ष्य हृदयं मे संतोषम्
अनुभवति ।

गिरिजा—बले वेगे च षडाननोऽद्वितीयः गणेशो मेधावी भावुकश्च । सत्सु निर्णायकेषु पारस्परिको विवादो व्यर्थः ।

शङ्करः—युवयोः सफलतया प्रीतो देवराजो गणेशं रक्षामन्त्रिपदेन षडाननं च सेनापतिपदेन भूषयितुं प्रार्थयते इति आकाशवाण्या संदिष्टोऽस्मि ।

गिरिजा—अनुगृहीताः स्मः शक्रमहोदयैः ।

( उभौ पित्रोः पादयोः पततः )

शङ्करः—स्वं स्वं कर्तव्यं सावधानतया प्रतिपालयतम् ।

गिरिजा—राष्ट्रोन्नतिकरौ भवतम् प्रमादं कदाऽपि न भजतम् ।

गणेशः—पितृचरणाभ्यां शपे—

उदयमयतु भास्वान् पश्चिमायां दिशायां
हिमगिरिरपि यायाद् दाढ्र्यं शृङ्गं विहाय
गमयतु निजसीमां ह्रस्ववृद्ध्योः पयोधिस्
तदपि नहि सृजेयं भिन्नपन्थानमीश ॥ ९ ॥

षडाननः—भवदादेशात् ।

पथिगतहिमविन्ध्यं पादघाताद् विभोऽहम्
असिततिलसमत्वं प्रापयिष्ये क्षणेन
उदधिमपि विशालं शुष्कतां श्वासमात्रात्
किमधिकमिह जल्पै भस्मतां शत्रुसंघम् ॥ १० ॥

शङ्करः—वत्सकौ ! सामयिकमिदं वो वचः । निष्प्राणानामपि नाडीषु रक्तं सञ्चारयति । बलो द्वैगुण्यमापद्यते भीतिश्च भीता रोरुद्यते ।

गिरिजा—देवाः सफलप्रतिज्ञं विदध्युः ।

गणेशः—अबोधे मयि व्यवहाराणामपारदृश्वनि योऽयं निहितो गिरिकूटसमोभरस्तन्मार्गदर्शनेनानुरक्षणीयो । यतो हि—

नहि मन्त्रितमेकेन साधुत्वं प्रतिपद्यते
नानुमोदितमन्यैश्चेत् संशयमधिरोहति ॥ ११ ॥

देशकालविदप्येको नीतिशास्त्रविचक्षणो
गुरुशुक्रसमो वाऽत्र कर्तव्ये मोहमेष्यति ॥ १२ ॥

शङ्करः-पुत्रक सर्वमिदं भविष्यति विप्रप्रसादात् ।

नन्दिकेश्वरः-( प्रविश्य ) देवराजस्यानुचरः प्राप्तः । श्रुत्वा देवः प्रमाणम् ।

शङ्करः-प्रवेशय त्वरितं ।

नन्दिकेश्वरः-यथाऽऽदेशः ( निर्गतः )

अनुचरः-( प्रणम्य ) भगवन् कार्यभारस्वीकरणाय भवदीयौ वत्सौ प्रार्थितौ देवराजेन प्रेषितं च विमानं । श्रुत्वा देवः प्रमाणम् ।

शङ्करः-अनुपदमेव प्रेषयामि ।

अनुचरः-अनुगृहीतोस्मि ( निर्गतः )

शङ्करः-गिरिजे पुत्रकौ विदायं कर्तुं माङ्गलिकानि समानय ।

गिरिजा-एषाऽहं समागता एव । ( निर्गता )

शङ्करः-पुत्रकौ व्यवहारपरम्परामनुसरन्तौ तोषयतं शक्रं ।

( प्रविशति माङ्गलिकवस्तुहस्ता विजया तदनु गिरिजा च )

गिरिजा-सर्वं समुपस्थितं ।

उभौ- ( तिलकं दत्वा पुष्पैः साक्षं शिरस्याघ्राय ) शिवाः सन्तु वो मार्गाः ।

गणेशः-( प्रणमन् ) गच्छामि तात आशिषा सह ।

षडाननः-( प्रणमन् ) अहमपि भ्रातरमनुगच्छामि ।

( सर्वे निष्क्रान्ताः )

❀

( ततः प्रविशति शची देवराजश्च )

शची-आर्यपुत्र ! प्रेमाश्रुखचितं ते मुखं रमणीयतरं प्रतिभाति रूपमिदं ते संलक्ष्य सुप्तोऽपि गिरीयते मदनः । यतो हि--

प्रेमाश्रुसंसक्तमुखं धवस्य रोमाञ्चितं कान्तवपुर्निमग्नम् ।
विलोक्य नारी सुखमेत्यनल्पं ततः परं नास्ति सुखाय किञ्चित् ॥१॥

देवराजः--प्रिये नैषो हि कौतूहलविषयः । दिनाधिपः प्रकृष्टभाभिस्तमो निरस्य कमलश्रियं विकासयति विश्वमदो निजे कर्तव्ये विधौ नियोजयति, सोमो निशां धवलयन् कुमुदिनीं हर्षयति परन्तु चेतनचैतन्यस्य म्लापयितुर् मदनात् सम्भूतोऽयं खेदोन्धंतमो यतो भासयत्स्वपि दिनेशादिषु तमिमं दवयितुं ललनालपनचञ्चत्चन्द्रचन्द्रिकैव सक्षमा ।

शची-प्राणवल्लभ ! श्रीमतां सुधोपमं वचो युक्तिभिः प्रमाणैश्चानुमोदितम् । तथा च श्रुतिः

न तत्र सूर्यो भाति न चन्द्रतारकं
नेमा विद्युतो भान्ति कुतोऽयमग्निर्
यस्य भासा सर्वमिदं विभाति
तमेव भान्तमनुभाति सर्वं ॥ १ ॥

देवराजः-( अतिमात्रं विहसन् ) प्रिये ! ब्रह्मपरां श्रुतिं कामपरां निदर्शयन्त्यास्ते बुद्धिवैशद्यमहो !

शची-आर्य ! श्रुतिरल्पश्रुताद् विदुषो विभेति यदयं संकुचितमर्थं विधाय व्यापकतां प्रहरिष्यति । अत्र प्रजासमृद्धिकामा श्रुतिः कामं स्तौति । तासामभावे एकोऽपि वक्ता श्रोता अभ्यसिता मन्ता वा सुलभो न स्यात् श्रुतेः । तथात्वे तस्याः प्रचारः प्रसारश्च विहतौ स्याताम् ।

देवराजः-प्रिये धन्यासि यत्त्वमेवं स्वेष्टपक्षं समर्थयसे । तवानेन वाग्वैदग्ध्येन ममाधयो व्याधयश्च न्यूनायन्ते ।

शची–लोके यद्यद् अपेक्षितमस्ति सुखाय तत् सर्वं सम्प्राप्तमिह तथापि आधयो व्याधयश्च तुदन्ति इति महदाश्चर्यं।

यथा—

अमूल्यरत्नै र्मणिहेमकुप्यैः सरूप्यकै र्भासि गृहं सदा नो
सुखाय जीवस्य यदस्ति स्वामिन् तदस्ति सर्वं वद चाधिहेतुम् ॥२॥

अथ च

सपुत्रनारीजनतास्वमित्रैर् वशंवदै र्भृत्यजनैरखिन्नैर्
अमात्यसेनापतिभिस्ससैन्यैः सहास्ति लक्ष्मी रमणीव हर्म्ये ॥३॥

देवराजः–प्रिये !

अर्थो नियन्ता जगतां प्रशास्ता आबालवृद्धै र्मनुजै र्यतोऽयम्
यत्नान्वितैः सेव्यत एव दैत्यै र्देवैः सदा सत्यमिदं ब्रवीषि ॥ ४ ॥
धनहीनान् विपद्ग्रस्तान् नित्यं मानेन वञ्चितान्
क्षुधार्चिः शुष्कसर्वाङ्गान् सर्वदा कष्टकारिणी ॥ ५ ॥

परन्तु एतद व्यतिरिक्ता अपि सन्ति विषया आधिव्याधीनाम

शची–आर्यपुत्र !

परिजनसुखसम्पन् सेवमाना विभाति
विनयमसृणवृत्तै र्याति रागं वचस्सु
विततगुणगरिम्णा भाति विद्वत्सभा च
जगति विकचकीर्तिः श्वैत्यराज्यं तनोति ॥ ६ ॥
विधिरहिपतियुक्तश्शशाङ्करो विघ्नराजः
कलयति तव भूते नित्यवृद्धिं मनस्विन्
तरणिरिव सुकीर्ति र्विश्वमारज्यतेऽहो
तदपि तव मुखाब्जे ह्याधयो व्याधयश्च ॥ ७ ॥

प्रतिहारी–( प्रविश्य ) जयतु देवः । मेनका दर्शनमाकांक्षति श्रुत्वा देवः प्रमाणम् ।

देवराजः–प्रवेशय

प्रतिहारी–यथादिष्टम्　　( निष्क्रान्तः )

देवराजः-सर्वतः कठिनमस्ति महिमासुरक्षणं। महतां हृदये स्वदेहस्य जीवनस्य सुखस्य दुःखस्य न भवति आभासः लोकरक्षणस्य लोकोन्नतेश्चैव भवति।

मेनका-( प्रविश्य प्रणम्य ) कीदृशी चिन्ता राजन् भवतां हृदये जागर्ति ?

उद्यद्दिनेशकमनीयकलाविलासै
र्हासं गते सुविमले कमले वसन्ती
लक्ष्मीः प्रसन्नसुमुखी तवभक्तिभावात्
सक्ता सदा परिजनाः सुखसम्पदश्च ॥ ८ ॥
विधिरुदश्रिमुखोऽसौ वाचमेनां श्रवोभ्यां
विहितनिजहृदन्त हर्षराशि निपीय
सकरुणमतिमात्रं स्वं भविष्यत्यभीक्ष्णम्
धरणिरपि चला स्याल्लुप्तधर्मा त्रिलोकी ॥ ९ ॥

देवराजः-मेनके सर्वं ज्ञात्वाऽपि अज्ञातभावा इव भणसि। दनुजा आक्रमणकरणाय सन्नद्धा लक्ष्यन्ते। तेषां सन्नद्धतायाः सूचना प्रतिक्षणं चारैः मिलति। अधुनापि अस्माकं सैन्यं सञ्चालकहीनं सेनापतिविहीनं चास्ति। अद्यापि गणेशषडाननौ नायातौ। प्रतिक्षणं रक्तचापो मे वर्धते (शचीमभिलक्ष्य इयमपि चिन्तापनयनाय यतते। त्वमपि तथा कर्तुमिच्छसि। अस्त्यवसरो निश्चिन्ततायाः ?

शची-प्राणनाथ !

अभीष्टलब्धौ न सुरा न विष्णु र्हरो विधाता नहि जीवलोको
निमित्तमास्ते विहितं परत्र अतो ह्यसक्तः कुरु कर्म स्वीयम् ॥१०॥

देवराजः-प्रिये ! राज्ञो धर्मः गृहस्थधर्मात् सन्यासिधर्मात् च भिन्नः। तयो र्विश्वासेनानेन कर्मसिद्धिः परन्तु राजा तु प्रकृतिरक्षणादेव कर्मसिद्धिमवाप्नोति।

मेनका-मघवन्
प्रामाण्यमायान्ति सदेन्द्रियाणि संश्लिष्य तत्तन् विषयैरमुष्मिन्
भूते भविष्यत्यगतिं श्रयन्ते आप्तागमा लब्धपदास्त्रिकाले ॥११॥

देवराजः-सत्यं ब्रवीषि। परन्तु चेतो वेपते।

मेनका-राजन्! इदमपि न वाच्यं। नृपस्य दृढता एव करोति दृढं सैनिकं समरे। भूतिमिच्छता नृपेण निभृतेऽपि स्थले स्वाकारगोपनं करणीयं। आकारेणापि कुशलाः नीतिमनुमिन्वन्ति। उक्तं हि—

पयस्सुगुप्तिप्रचिताऽङ्घ्रिपो मां नयो हि सूतेऽखिलभूतधात्रीं
सुभासि दोषार्थगुणैर् विरुद्धस् तनोति नो पुष्पकृत्तांशुरम्याम् ॥१२

देवराजः-किं करोमि नास्ति अवलम्बनं हृदयस्य।

शची-आर्यपुत्र! एतावतीं कातरतां मा याहि। तत्रभवान् भगवान् शङ्करः समयेन समुपस्थापयिष्यति।

मेनका-हृदयो मे ब्रवीति यत् कापि शुभा सूचना आगच्छति।

प्रतिहारी-यथा निर्देशः (निष्क्रान्तः)

अनुचरः-(प्रविश्य) विजयतां महाराज! विमानेन तौ समायातः।

देवराजः-शीघ्रं समुपस्थापय। आगतो मेऽवलम्बः।

अनुचरः-महाराज! प्राणेन यते। (निष्क्रान्तः)

(ततः प्रविशति गणेशः षडाननश्च)

उभौ-विजयतां देवराजः।

देवराजः-स्वागतं वः (उत्थाय चासनमभिगम्य) रक्षामन्त्रिन् महोदय। एतद् भवतामासनं स्थानं गृह्यतां। (अन्यदासन सङ्केतयन्) सेनापते एतद् भवतः स्थानमस्ति। अलङ्क्रियतां। (स्वयमुपविश्य) महान् विलम्बोऽभवत्।

गणेशः-भावुकता प्रेमाधिक्यं चास्ति विलम्बकारणम्। इमे के?

देवराजः- संकेतेन) इयम् मदीया प्रिया शची। इयञ्च मेनका

सदस्या मत् सभायाः ।

षडाननः-करणीयं संक्षेपेण निर्दिशन्तु अत्रभवन्तः ।

देवराजः-देवेभ्यो निराकृताः सततं दनुजा उन्मनायमानाः स्वर्लोकमाक्रमितुं महान्तं यत्नामतन्वन्ति, प्रतीयन्ते यत् ते शीघ्रं देवपुरीं रोत्स्यन्ते । अतो देवबलं निखिलसाधन-सम्पन्नं विधेयं । प्रतिक्षणं सीम्नि दक्षोक्षणैर् जागरुकै देवसैनिकै भाव्यम् । काले अणीयसी अपि अनवधानता महान्तमनर्थं साधयितुं प्रभवति ।

शची- अणुरपि दोषोऽक्षमतासाधको न भवेत्तस्मिन्निति ध्येयं । देवपुर्याः सीमा सर्वतोभावेन सुरक्षया । स्वर्गाधिपतेर् हस्ताक्षरमुद्राङ्कितं निदेशपत्रमनधिगत्य वनमक्षिकाऽपि सीमानमतिक्रामतुं न पारयेदिति चिन्त्यं निपुणं ।

गणेशः-अतोऽपरमपि कर्तव्यं प्राप्तकालिकं शिष्टं स्यात् तदुपदेश्यमत्रभवता ।

देवराजः-नहि किञ्चिदनुभवाम्यवशिष्टं । शेषं समयेन ।

षडाननः-महाराज ! क्षणादस्मात् चिन्तारहितै भाव्यं । किमधिकं, सम्प्रत्येव दनुजादयः सूर्यप्रकाशाद् दिवान्धा इव भीता इतस्ततो वेपमानाश्चरिष्यन्ति गोपायितु-मात्मानं ।

गणेशः-महाराज ! स्वकार्यक्षेत्रं गन्तुं समीहे ।

षडाननः-सेवकोऽपि तथा ।

देवराजः-भवन्तौ सममेव गच्छतां ।

उभौ- गृहीतं वचः ( निष्क्रान्तौ )

मेनका- अधुना तु परमनिश्चिन्ततामापन्नो भवान् ।

देवराजः-आम् आम् सुस्वस्थोऽस्मि ।

शची-महाराज ! आज्ञापय देवपूजनाय अतिक्रामति देवपूजनवेला ।

मेनका-अहमपि अनुगन्तुं समीहे ।
देवराजः-गच्छतं यथेष्टं । ( उभे निष्क्रान्ते )
प्रतिहारी-जयतु देवः । उर्वशी दर्शनाय प्रार्थयति । श्रुत्वा देवः प्रमाणम् ।
देवराजः-प्रवेशय
प्रतिहारी-यथा आज्ञा ( निष्क्रान्तः )
उर्वशी-( प्रफुल्लवदना ) विजयतां महाराजः ।
देवराजः-एह्येहि । सम्प्रति पूर्णचन्द्रकमनीयकान्तिकुमुदिनीवातिप्रसन्नाऽसि ।
उर्वशी-नाहमेव महाराजः ! आनन्दयुक्ता अपि तु सर्वे देवाः सस्वर्गवासिजीवा अप्सरः सम्वलिता ।
देवराजः-तत्र को हेतुः
उर्वशी-महाराज ! श्रीमतो गणेशस्य प्रतापेन रक्षाप्रबन्धेन च इयं स्वर्गपुरी निरातङ्का नन्दनं सर्वकालं पुष्पफलान्वितं विभाति ।
देवराजः-अस्त्येवं ।
उर्वशी-अथ किम् । असुराणां मनागपि बाधा न खेदयति । विधवाभूताऽलकाऽद्य पुरन्ध्रीव कृतशृंगारा विभाति । असुरभीता भूलोकवासिनश्च मुनयो महर्षयो धार्मिका याज्ञिकाश्च डिण्डिमघोषेण स्वस्वक्रियायाः सम्पादनं कुर्वन्ति । भुवनमखिलं तपोदानदयासंयमचितं सत्यन्यायशौर्यैरतमास्ते ।
देवराजः-एवं चेत् सन्तापमनुभवामि ।
उर्वशी-महाराज ! अतोऽप्यधिकमाश्चर्यमस्ति । ये चासन् धर्म्योत्पीडका ते स्वेच्छया पातालमधिवसन्तो धर्म्यवृत्तैरलङ्कृता देवानपि अतिशेरते । भारतं तु द्वितीयं स्वर्गमिव विभाति । तत्रत्या लौकिकं पारलौकिकं

चाहर्निशं साधयन्तोऽव्यग्रा मोदमाना राजन्ते ।

देवराजः–इयं तु महती सफलता व्यवस्थायाः ।

उर्वशी–महाराज ! तेषां करद्वये मोदकः । सम्प्रति नवान् नवान् भोगान् भुञ्जते, आयत्यर्थं शुभानि कुर्वते । तत्र निवासिनो मानवजीवनस्य चरमं लक्ष्यम् अपवर्गमपि लब्धुं क्षमन्ते । अतो देवा अपि स्पृहयन्ति भारतवर्षाय ।

देवराजः–सम्प्रति पूर्णं निश्चिन्तोऽस्मि । यादृशी कल्पना आसीत् तादृग् एव व्यवस्थापको मया सम्प्राप्तः ।

उर्वशी–सुरेन्द्र तेजो भवतो महत्तमं बलं दृढं येन हता सपत्नाः
समूलघातं भयकुञ्जनष्टिः यशस् सुधांशु वृणुते त्रिलोकीम् १३॥

अपरं च

राज्यं दारा द्रविणमखिलं यौवनश्रीविलासाः
श्रौतं स्मार्तं त्रिविधमननं शास्त्रषट्कैर्विनेयम्
तावच्छ्रेयो ददति मुदितान् सम्मुखेयान्ति यावत्
वात्सल्यस्याऽभिमतसुयशस्तारकेचांशुनाथान् ॥ १४ ॥

देवराजः–शोभने

गताऽऽसुरी भीतिरिताः प्रसादं प्रजाः स्वतंत्रा नियते विधौ स्वे
नन्दन्ति नित्यं मणिरत्नभाभिः सीमन्तिनी भूरधुना मया नु ॥१५॥

उर्वशी–अधुना किं वाच्यं भवतो राज्यस्य ।

देवराजः–सर्वत्र भ्रमणरतया त्वया संतोषसुखसम्पत्तिरेव दृष्टा इति महदाश्चर्यं । चरैर्दोषाश्चेया ।

उर्वशी–मार्गितेऽपि दुर्लभः स्याच्चेत् ।

देवराजः–असत्यं निवेदनीयं (विहसति)

उर्वशी—नहि नहि एतत् परम्पराविरुद्धम्। मया कुत्रापि न दृष्टा दोषाः।

सुरेश देवा मनुजास्तपस्विनो महर्षयो वैदिककर्मलीना
दिनं दिनं पुण्यचयैः समूढा सुखैश्चिता ते कृपया रमन्ते ॥१६॥
शशी दिनेशस्तपतस्तमोन्धम् धरा प्रसूते सुहितं सुभिक्षम्
सुराः स्वदन्ते स्वहवींषि यज्ञे महस्त्वदीयं खलु यत्र तत्र ॥१७॥

देवराजः—उर्वशि ! रूपगुणगीतलावण्यमिव मनीषाऽपि तेऽद्वितीया। वरय मनसेप्सितम्।

उर्वशी—श्रीमतो गणेशस्य परिणयदर्शनेन अनुगृह्णीयुः।

देवराजः—भवतीनामभिलषितं सद्यः पुरोऽक्षिष्यते चेद् विधिना समर्थितः स्यात्।

( उभौ निष्क्रान्तौ )



( ततः प्रविशति कौवेरी सुनन्दा च )

कौवेरी—सुनन्दे इमे मे सुते ये स्वजन्मना हृदयकमलं विकासयत स्म त एव इम अधुना वरान्वेषणकाले तं मुकुलयते ।

शशिप्रभाराज्यमदस्तमोभिः सुगुप्तमात्मोन्नतिभिः प्रकाश्य
तनोति हर्षं स्म यथा तथा मे सुताद्वयी हार्दमनुत्तमान्तम् ॥ १ ॥

सुनन्दा—सखि ! एतावत्या चिन्तया अलं । सर्वो लोकः पथानेनैव चलति । अस्मज्जननीष्वपि ध्यानं देहि ।

कारुण्यमूर्ति जननी यदा नो स्नेहाम्बुराशिस्तनुभृत्सुतानाम्
दोषान् हरन्ती सुगुणान्भरन्ती स्तन्यं ददाना न भवो यथैषः ॥२॥

कौवेरी—सुनन्दे ! निपुणासि जानासि च बोधयितुं । परन्तु सर्वा जनन्यः सर्वे च जनकाः कालेऽस्मिन् चिन्ताग्रस्ता भवन्त्येव ।

जननी जनकौ शश्वत् पोषयेते सुतां सुतम्
आयतौ भारकारिण्या कन्यया तपतो भृशम् ॥ ३ ॥
वयोवृद्धिकलारूपधनविद्याकुलैः समः
सद्वृत्तो दक्षिणः सौम्यो वरो लभ्यः कथन्नु वै ॥ ४ ॥
सुखमेष्यति दत्ताऽपि दुःखं वा सततं हि सा
एवं शोकसहस्रेण कष्टं यातो दिवा निशम् ॥ ५ ॥

सुनन्दा—देवि ! चिन्ताशीलाऽपि ईर्ष्यालुरिव सर्वत्र कष्टमेवानुभवति । ईदृग्विधे सर्वसुरनरदुलर्भे नगरोपवने चलन्ती अपि न पश्यसि पुष्पितान् कर्णिकारान् भ्रमरयुतान् गुलाबान् स्फुरन्त्यश्चटकाः कूजन्त्यः कोकिला मञ्जरीनम्रान् सहकारान् वा । अद्य आगते स्वामिनि सर्वमिदं निवेद्य चिन्तामुक्ता भव । मन्ये तेनावश्यं किञ्चित् सुविचारितम् अतो हि सः सुस्थिरः ।

कौवेरी—चतुरे ! तस्य सुस्थिरता मयाऽपि ज्ञेया । यदा तेऽक्षिपथं

यातस्तदा वदनम् म्लायते नेत्रयोरन्धकारमायाति सर्वं शरीरं झणझणायते। यथेयं मञ्जरी काले सहकारेण संगता लसति तथैव वरा अपि काले वरेण संगता प्रमोदाय।

सनन्दा–देवि इयं मे मानसी ध्वनि येन् चिन्तेयं भवदीया किञ्चिन् महल्लोककल्याणं विधास्यति।

चिन्ता त्वदीया भवितेति जाने क्षेमाय लाभाय शुभे त्रिलोक्याः
दिविष्ठभूमिष्ठजनाः समृद्ध्या निरापदश्शान्तिमलं लभेरन् ॥६॥

कौवेरी– नेपथ्यात् पदध्वनिमाकलय्य ) अये कोऽपि इत एव समागच्छति किम्।

सुनन्दा–गच्छामि ( निष्क्रान्ताः )

कौवेरी– स्वगतम् ) अतिमुग्धास्ति। न जानाति महतां कुलानामाचारं।

सुनन्दा–( प्रविश्य ) भवतामन्वेषमाणोऽलकेश्वरः समायाति इत एव।

कौवेरी–गत्वा भण यत्रास्ति सा प्रमदवने।

अलकेश्वरः–( प्रविशन् ) भो सा कुत्रास्ति, नास्ति प्रमदवने चेत्। ( उत्तरमनवाप्य ) सुनन्दे त्वमेव वद।

सुनन्द–महाराज विजयतां नाहं समर्थास्मि।

अलकेश्वरः–भण भण विश्रब्धं भण। का वार्ता।

सुनन्दा–महाराज !

अहर्पतिः खेऽविरतं प्रयाति तमो विना साधयते जगन्ति।
तथा भवनाशु दधातु यत्नं यतोऽभिलाषस् सफलो भवेन्नः ॥७॥

अलकेश्वरः–अयि मूर्खे स्वाभिष्टं तु वद।

सुनन्दा–सुतयो विवाहः

अलकेश्वरः–(अग्रेगच्छन्) एतदर्थमेव प्रिया मे कुपिता (बाहुमादाय)

समुखि धवलमिश्रे रक्तिमा ते मुखस्य
जयति कमलकान्ति राजते खेंऽशुमाली
रचयति वनमेतत् मूर्तिमत् स्फूर्तिसारम्
प्रविश भुवनवन्द्ये वर्धयन्ती विनम्रान् ॥ ८ ॥

कौवेरी–( गद्गदश्रु नेत्रा रुद्धकण्ठा च ) काऽऽशा मात्राऽऽलापेन न दृष्टो भवता एकोऽपि वरोऽधुनापि ।

अलकेश्वरः–प्रिये नाहं स्वाधीनः । सन्त्यन्येप्यधिकारिणो ममोपरि । अनादिष्टः पद्मपि गन्तुं नालं । यावान् समयो मिलति तावानत्रैव लगयामि । जनतायाः सेवाऽपि कठिनाऽवश्यं करणीया च

प्रजा सुरक्षा शिशुवत् सुमृद्वी मनोवलं स्तन्यमपेक्षते या
प्रतिक्षणं सावहितेन भाव्या न चेद् विपन्ना कुयशस्तनोति ॥ ९॥

कौवेरी–नाथ श्रीमन् प्रातरासायं राज्यकोषयोः कर्मविताने धनसंग्रहे च लग्नः सुतयो र्विवाहविषयिणीं वार्तां कदापि न चिन्तयति ।

अलकेश्वरः–प्रिये यथा त्वं तथैवाहमपि अनिद्रः स्वपिमि । सर्वं विधास्यति कल्याणं भगवान् भूतभावनः शंकरः ।

दौवारिकः–जयतु जयतु देवः । भगवान् नारदः सम्प्राप्तः ।

अलकेश्वरः–सादरमानय ।

दौवारिकः–यथाऽऽदेशः ( निष्क्रान्तः )

( दौवारिकानुगतो नारदः प्रविशति )

अलकेश्वरः–( प्रणम्य ) भगवन्

उपचितवहुपुण्यै र्जन्मजन्मान्तरोत्थैर्
गमितमिदममोघ दर्शनं श्रीमतां नो
दृगभिमतसुमोदे स्नापयन् भो मनो वै
कलति नहि निमेषं चन्द्रविम्वं चकोरः ॥ १० ॥

अथ च

पिता माता यथा पुत्रं लालयन्ति दिवानिशम्
तथा त्वमसि संप्राप्तः पालयन् मां महामुने ॥११॥

नारदः-स्वस्ति ते। ( नेपथ्यात् )

वयं पिका नन्दनवासपूता विभो त्वदीयागमनेन, हृष्टा
विलीनकार्ष्ण्या मधुरागरक्ताः स्तुमो यशो भीतिहरं समर्च्येम् ॥१२

नारदः-अये देवराजोऽपि नन्दनमाध्यमेन मां स्तौति।

अलकेश्वरः-अथ किम्।

नारदः-अलकेश्वर ! सपरिवारः कुशली असि।

अलेश्वरः-भवतां कृपया सर्वं कुशलमेव केवलं एका दुश्चिन्ता मां विधूनयति।

नारदः-का सा ?

अलकेश्वरः-कन्यके मदीये विवाहयोग्ये स्तः। तयो वरान्वेषणे महत् काठिन्यमनुभवामि । त्रिलोक्यां भ्रमता भवता दृष्टो कश्चिद्वरश्चेद् समादिश्यतां।

नारदः-वरान्वेषणे समयं न यापय। संसदि कथाप्रसङ्गेन पित्रा निर्दिश्यमानां भवितव्यतामेवात्र शृणु।

उभौ-भगवन् आवेदय।

नारदः-महर्षिसभायां तेनाजेन भणितम् "यथा कौवेर्योः कन्ययो र्विवाहो महाविदुषा गणेशेन भवितेति"। को नाम गजमुखाय लम्बोदराय वराय स्वीयां गुणाढ्यां कन्यां दास्यतीति तैराक्षिप्तः स विभुः जगाद न करिष्यति तु भागधेयमन्यस्य प्राप्स्यते किं।

अलकेश्वरः-कर्तव्यमेव, कोन्योपायः।

कौवेरी-भगवन् कथं स्वीकरिष्यति भगवान् शङ्करः।

नारदः-यथा त्वं स्वीकरोषि तथैव सोऽपि स्वीकुर्यादेव। को नु भावितव्यतां वारयिष्यति।

अलकेश्वरः भगवन् तथा यततां यथा विवहोऽयं सम्भवो भवेत् ।
नारदः- गत्वा प्रेरयामि देवराजं तव साहाय्यकरणाय ।

( निष्क्रान्तः )

अलकेश्वरः-अहो मुनेर्गतिः

सन्दिश्य एवं मुनिरिन्द्रसद्म गच्छन् शनै र्खे व्यगमत् पुरस्तात्
स्थूलस्तनुः सूक्ष्मतरो ह्यदृश्यः तपः प्रभावो वचसामगम्यः ॥१३॥

कौवेरी—वस्तुतो नाथ !

अलकेश्वरः-प्रिये सन्तुष्टा भव सम्प्रति ते चिन्तनं न युक्तं । श्रीमन्तं भगवन्तं शङ्करमाराध्य विवाहप्रस्तावं तत्सूनोः स्वीकारयितुं प्रभविष्यामि । असौ भगवान् दानेऽभ्यस्तः न च याच्ञायां । अतः स न याचिष्यते मह्यम् ।

सुनन्दा-जयतु नाथ ! तस्मिन् समागते भोजनव्यवस्थायामपि न भविष्यति किंचिद् व्ययो ।

कौवेरी-नाथ ! कल्पतरुः कस्मै याचते । श्रुत्वेदं वृत्तं नास्ति सीमा मे प्रसन्नतायाः

हार्दं पद्मं विकसितमहो ब्राह्मवाचो निशम्य
पुत्र्योर्भाग्यं सुततसुखदं भावि ताभ्यां महीयो
दुःखं स्वल्पं तपति जननीं भो सुतासंश्रित वै
धन्या कष्टं गलितमधुना विघ्नराजं वृणोतु ॥ १४ ॥

अलकेश्वरः-प्रिये असौ महोपकारी खलु पूजकानां । स्वयं भुक्त्वाऽपि तुच्छं वस्तु ददाति मनोवाञ्छितं भजकाय । तेषां दुःखं द्रष्टुं न पारयते । असावेव वितरति अपवर्गं न्यूनातिन्यूनसेवया । सांसारिककष्टविषं पीत्वा दापयति सुखामृतं तदिच्छुकाय । का कथा प्राणिनां देवा दानवाश्च समानरूपेण रक्षितानेन । पश्य—

विविधदनुजकाम्यं लक्ष्यमासीन्महश्चि
अमृतमुदधिजन्यं लब्धमेभिर्विषं प्राक्
कवलितममुनैव स्वार्थराहित्यभाजा
अकृत सुखिन एतान् प्राप्तपीयूषरत्नान् ॥ १५ ॥

कौवेरी–महाराज ! अहितकरो खलु विलम्बः। भगवन्तं द्रष्टुं गच्छतु महाभागः सह दायोदैः।

अलकेश्वरः–प्रिये क्षिप्रकारितां त्यज। अस्माभिः सुपूजितो भगवान् नारदः श्रीमन्तं शक्रं समाराध्य श्रीशिवप्रसन्न-करणाय शीघ्रमेव सूचनां दापयिष्यति। महतां पार्श्वे महतामेव भवति सत्क्रिया। मादृशाः क्षुद्रसेवका एतावतीं महतीं वार्तां तत्र समुपस्थापयितुं न समर्थाः। कार्योऽयं महान्। विना महान्तमस्य साधनं दुष्करं।

कौवेरी–महाराज ! यत्नं विना कार्याणि न सिद्ध्यन्ति। सुतं प्रत्युदाराऽपि माता रुदते एव स्तन्यं ददाति। अत्युदारोऽपि प्रभुः समाराधनमपेक्षिष्यते।

अलकेश्वरः–सर्वं साधयति विधिरेव। अत्रस्थैरेवास्माभिः समाराधनं विधेयं।

दौवारिकः– प्रविश्य ) विजयतां महाराज उर्वशी द्वारि प्रतीक्षते। श्रुत्वा देवः प्रमाणम्

अलकेश्वरः–सादरमानय

दौवारिकः–यथा निदेशः ( निष्क्रान्तः )

उर्वशी–विजयतां देवः

अलकेश्वरः–आगम्यतां देवि। अस्ति कुशली तत्रभवान् शक्रः

उर्वशी–सर्वं कुशलं तत्रभवतां। श्रीमते आशिषो वितरति।

अलकेश्वरः–अनुगृहीताः स्मः।

उर्वशी–भगवता नारदेनादिष्टोऽस्माभिः सम्प्रार्थितश्च महाराजो देवराजो भगवन्तं शङ्करमवुरुध्य विज्ञापयति यद् भवता

परेद्युरवलोकनीयो देवः पुरारातिरहमपि कालेन साहाय्यं करिष्य इति ।

अलकेश्वरः-अयि महनीये ! वारम्वारं साष्टाङ्गं प्रणमामि यथानिदेशं प्रस्तुतो भविष्यामि ।

उर्वशी-निवेदयिष्यामि यथोक्तं श्रीदेवराजमहोदयाय । (निष्क्रान्ता)

अलकेश्वरः-अयि गमनमङ्गलं समाचरितुं गृहं प्रविश वामे ।

कौवेरी-तद्दिनं कीदृशं भविष्यति यदाऽवलोकयिष्यामि दुहितृसहितं जामातरम् ।

अलकेश्वरः-तदा तु सर्वमेव नभस्तवहस्ते भविष्यति ।

(निष्क्रान्ताः सर्वे)



( ततः प्रविशति मेनका )

मेनका-( स्वगतम् ) पुरुषस्य तेज एवास्ति सम्पूज्यं न च जीवनम् । इदमेव संसरणं यत्पूर्वं रक्षास्थिवर्षयाऽगम्यमासीत् तदेवाधुना देवर्षिगमनागमनेनागम्यमस्ति । इयं सा एव देवपुरी यत्र गृहाद् बहिः नावलोक्यते स्म नरो नारी वा नाश्रूयत वेदध्वनिस्तत्रैव सामगानैः कर्णकुहराणि स्फुटन्ति । यत्र भोजननिर्माणजन्यधूमपरम्परा अदृश्या आसन् तत्रैव दृश्यन्ते आहिताग्नयः । अहो प्रभावस्तेजसां । कियत् सुन्दरं कर्म कृतं देवराजेन गणेशं रक्षामन्त्रित्वे समुपस्थाप्य ।

उर्वशी-( प्रविश्य ) सखि कथमेकाकिनी भ्रमसि ।

मेनका-उर्वशि चकितास्मि गणेशव्यवस्थयानया । अयमस्ति अस्मत्समक्षम् समुत्पन्नो बालकः परन्तु कियानस्ति बुद्धिमान री ।

उर्वशी-मेनके देवपुर्यामस्ति का तस्य व्यवस्था । गत्वा पश्य भूलोकं पातालं वा । न जानासि किं देवाः पुरीमिमां त्यक्त्वा गच्छन्ति भारतं । महाराजेनानुरुध्य बहवः स्थापिताश्चात्र ।

मेनका- परिक्रम्य ) सखि पश्य सभाभवनमिदं पूरितप्रायम-धुनैव । सम्भवतः स्थानग्रहणाय चावयोर् नास्ति एकोऽपि मञ्चः किम् ।

उर्वशी-सखि ! कतिपयैरेव दिवसैः पूर्वं नासीदेकोऽपि स्थाताऽत्र मञ्चेषु । अस्माभिरानन्दितोऽपि देवराजः पूर्णं न हसति स्म ।

मेनका-सर्वमिदं विभात्यैव भारतीया मनीषा तेजसां पूजनाय चोपदिशति ।

( ततः प्र वश त देवराजः । सर्वे उत्तिष्ठन्ति )

देवराजः-तिष्ठन्तु अत्र भवन्तः । ( सर्वे तिष्ठन्ति )
येषां महोदयानां याः समस्याः सन्त्यसमाहितास्ताः ब्रुवन्तु लिखित्वा वा ददतु ।

देवाः-विजयतां महाराज ! नास्ति किञ्चिदपि समस्यारूपं मादृशां । सर्वे कुशलिनः ।

भूदेवाः-जयतु महाराजः भूलोकेऽपि नास्ति काचित्समस्या । प्रजाः दिवानिशं धन्यं धन्यं नदन्ति । वर्धते तपः ।

देवराजः-गच्छन्तु स्वस्वस्थानं तत्रभवन्तो भवन्तः । समाकलय्य च दोषान् सूचयन्तु येन प्रजा मे किञ्चिदपि कष्टानुभवं न कुर्यात् । ( देवाः भूदेवाश्च निष्क्रान्ताः )

प्रतिहारी-जयतु जयतु देवः रक्षामन्त्रिमहोदया दर्शनमाकाङ्क्षन्ति । श्रुत्वा देवः प्रमाणम् ।

देवराजः-त्वरितं सादरं प्रवेशय ।

प्रतिहारी-यथा आदेशः ( निष्क्रान्तः )

गणेशः-विजयतां महाराज ! एषो गणेशः प्रणमति । सर्वं कृतं यथानिर्देशमासीत् श्रीमतां । च्युतिश्चेत् क्षम्यतां । अग्रे कर्तव्यम् मे निर्दिशन्तु तत्र भवन्तः ।

देवराजः-साधु ! भवान् वर्धतां । काऽपि च्युति र्नास्ति । चारैः स्थितिं ज्ञात्वा स्वकीयं कार्यं विधेयं । किं ते प्रियं करवाणि ।

गणेशः-महाराज ! न च देवपुरीमात्रमेव अपि तु सर्वा धरा अपि सम्यक् सुरक्षिता । सैन्यमभ्यासार्थं गुप्तस्थाने प्रेषयितुमनुजानातु तत्रभवान् । आधुनिकास्त्रैः सम्पूरयितुं विशेषं धनं च स्वीकरोतु महाभागः ।

देवराजः-प्रेषय सैन्यं यथाभिलषितं । कियत् धनं स्वीकरवाणि ।

गणेशः-एकादशार्बुदमात्रम् ।

देवराजः-हस्ताक्षरमिदं प्रस्तुत्य गृहाण कोषागारात् । अन्यत् किं करवाणि ।

गणेशः—उदारा दृष्टिः कृपालो विशेषेण।

देवराजः—सविशेषं। सेनापतेः कार्याणि सन्ति सन्तोषदायकानि।

गणेशः—महाराज न केवलं सन्तोषदायकमेव अपि तु प्रशंस्यं पुरस्करणीयं च।

देवराजः—पुरस्कारदण्डौ मूलाधारौ प्रशासनस्य। सुष्ठुकारिणे पुरस्कारमनुचितकारिणे च दण्डस् सततं देयौ। अतथात्वे अनुचितकारिणो निर्भयाः सुष्ठुकारिणश्चोत्साहहीना भवन्ति। अतः स्वल्पोऽपि पुरस्कारः समयेन देयः।

गणेशः-एषा सूचिका अनुज्ञापनार्थं प्रस्तुता।

देवराजः—मन्दबुद्धिरूपदेशेनाऽपि नावगच्छते। तुभ्यं बुद्धिस्वरूपाय किमुपदेष्टव्यम्। अति प्रसन्नोऽस्मि। जीवने सदा त्वां सिद्धयो बुद्धयश्च वृण्वन्तु।

गणेशः-महाराज ! सैन्यसमीपं गन्तुमनुजानातु श्रीमन्।

देवराजः-गच्छतु।        ( निष्क्रान्तो गणेशः )

उर्वशीमेनके-स्वागतं श्रीमते।

देवराजः—समीपमागम्यतां कथं दूरे स्थः। बहोः कालात् दृष्टोऽसि मेनके।

मेनका—शोभन एव प्राप्यते शोभनं महाराज। यथा भगवान् शङ्करोऽस्ति नियन्त्या शास्ता कलाधर्मी चातिशयोदारस्तथैवायं पुत्रस्तस्य।

देवराजः—विस्पष्टं भण।

मेनका-प्रकृतिस्ते महाराज प्रतिपलं प्रशंस्यते भवन्तं। रिपवः स्वदुर्गेषु अपि भीता एव सञ्चरन्ति। त्रिभुवने भ्रमन्त्या मया कुत्राऽपि नालोकिताः दोषाः राज्ञां प्रजानां शासकानां वा।

देवराजः-तु गृहाण पुरस्कारमस्य।

मेनका—नाहं पुरस्कारास्पदं । पुरस्करणीयो गणेशो भवान् वा ।

देवराजः—तस्मै एव पुरस्कारं देहि । लप किं दातुमिच्छसि ।

मेनका—यद् भवानभिलषति वा यदुर्वशी अनुमोदयति ।

उर्वशी—तस्मै देये कन्यके अलकेश्वरस्य ।

मेनका—री दुष्टे कन्यके अलकेश्वरस्य देये त्वया वानेन महापुरुषेण?

उर्वशी—अथ किं । सम्प्रति विधिरस्मि ।

मेनका—भवतः समक्षमियं करोति धृष्टतां । कथं भवान् न दण्डयति ।

देवराजः—मेनके मा कुपः सा सत्यं वदति । ( हसति )

मेनका—भवानपि परिहासं करोति । ( क्रोधं नाटयन् )

देवराजः—अयि शुभे क्रोधं त्यक्त्वा शृणु ( उर्वशीमुखो भूत्वा ) वद किमभवत् ।

उर्वशी—महाराज तत्रभवान् अलकेश्वरोऽगच्छत् कैलाशं भवता सार्कं स्वीकृतं च शम्भुना गणेशविवाहः एतावत् तु जानात्येव भवान् ।

देवराजः—आम् ततः परं वद ।

उर्वशी—ततः परं कन्ययोरूपगुणादिज्ञानाय प्रेषिता गिरिजया स्वसहचरी अलकां ।

देवराजः—कृतमिदं समुचितमेव मात्रा यतो हि—

अश्वे स्थितो रश्मिधरो वलिभ्याम् भीतिं न विन्देन् मुदितिं लभेत
आशाः समेयान् क्षणमात्रयत्नात् एवं न चेत् स्यात् स्खलितिं दधीत १

मेनका—अथ किं

कृषिः स्वहस्तेन कृता समृद्धिं ददाति नो चेद् विपदः प्रसूते
सुत य तद्वत् करपीडनं सत् निभाल्य कुर्वन् कुशली सदा स्यात् ॥२